TRIVANDRUM SANSKRIT SERIES.
No. CXXIV.

Sri Citrodayamanjari.
No. XIII.

# THE HARAMEKHALA

OF

Māhuka

with commentary

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

(Part I.)

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1936.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२४.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थसङ्ख्या १६.

---

# हरमेखला

## माहुकविरचिता
## सटीका

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधिता ।

---

[प्रथमभागः।]

सा च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता ।

---

कोल्लम्बाब्दाः ११११. क्रैस्ताब्दाः १९३६.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजानिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वाञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
**श्रीचित्रोदयमञ्जरी** सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

This work namely Haramekhala is a Talisman for all living things. Its scope is really very great as it protects the humanity at large as well as the Animal Kingdom. Though it is supposed to comprise of five chapters the first one could not be availed of. So the department that was busily engaged in trying all possible means in the hope of bringing the first chapter as well to light, had to postpone its publication. But all endeavours proving futile, this work of so many invaluable and essential informations has been belated in its publication, by us whose duty it is to preserve all that are extant. And the final result is this publication of the first part with no more delay. Three chapters – from the second to the fourth – have been included in it. They more or less deal with Ripudamana (supression of enemies), Vidagdhadayita (allurements) and Cikitsitayoga (medicinal treatments) in order. I hope that the addition of the contents showing the details of the subjects treated in each chapter will prove of great use to the students of the work. This book which deals with various Dhūpas and others that will cause delusions at some places, the suppression of elephants belonging to enemies at other places, the destroying of mosquitoes and bugs at others, enchanting the whole world at certain others, the avoiding of tormenting caused by planets at certain places and the treatments for diabetes at still other places, and such many other Prayogas, cannot be called a treatise on Tantra, incantations, medicines or worldly experience. Thus it defies all attempts of giving a name so as to denote the subject matter individually or collectively. Rather it gives in a nut-shell all the essential sciences of such kind. So it is said at the close "हरमेखला प्रयोगमाला रचिता ॥"

*Subject.*

Thus we are made to understand that this Haramēkhala is otherwise called Prayogamāla.

This Mekhala comprises of original Kārikas in Prakrit, Chhāyās – the renderings, and Tīka – the notes, in Sanskrit, and as such is quite understandable to the reader. The fact that it was written during a period when Prakrit was the current spoken language and that it was commented in Sanskrit on a later occasion amply testifies to its great antiquity. The historians are of opinion that Sanskrit originated from Prakrit. From the following passages found at the close of the work :—

*Nature.*

"धरणिवराहरज्जे
कविमण्डणतणअमाहवसुएण ।
रइआ चित्तउडे
माहुएण हरमेहळा ॥"

(प्राकृतम्)

"धरणिवराहराज्ये
कविमण्डनतनयमाधवसुतेन ।
रचिता चित्रकूटे
माहुकेन हरमेखला ॥"

(छाया)

"माधवाख्यस्य तनयेन चित्रकूटे निवासिना माहुकाख्येनैषा हरमेखला प्रयोगमाला रचिता"

(व्याख्या)

it is clear that the author is Māhuka who lived at Citrakūṭa and that he was the son of Mādhava, the grandson of Kavimaṇḍana.

"एत्थरसाए असुत्ताए
समाहमासम्मि ।
सत्तमदिणे समत्ता
विअबुद्धजणमुणिअपरमत्था ॥"

(प्राकृतम्)

"वत्सर(शु ? श) तेष्वष्टसु
समाघमासस्य ।
सप्तमदिने समाप्ता
विदग्धजनज्ञातपरमार्था ॥"

(छाया)

"श्रीविक्रमादित्यकालात् सप्ताशीत्यधिके धर्मशताष्टगते माघसप्तम्यामेषा हरमेखला व्युत्पन्नलोकैरेवावगततत्त्वा निष्पादिता टीका"

From such passages in the original, rendering, and commentary it is assumed that the date of Māhuka is the 9th century A. D., corresponding to 887 of the Vikrama Era, in which year the Mēkhalā was completed. The fact that such an antiquity is ascribed to the work is in itself sufficient excuse for the publication of this work by our department.

The place, date, name etc., of the commentator are not to be known either from internal or external evidences nor from other catalogues. Thus the method of Sanskrit rendering and commentary adopted in this work is unrivalled and unknown. That he mentions no other author, nor is he mentioned by others is the result of his living at Citrakūṭa

*The Commentator.*

and his performing penance that seems quite in keeping with his life. So this publication which throws light on both is indeed an asset to our department which was fortunate enough in getting access to the work I cut short my remarks, hoping that I shall discuss what remains in the second volume which is expected to be published shortly.

In this Haramekhala there appears to be another work after 181 Kārikas in the fourth chapter, and its name is Puttalikāpañcavimśati. In it are discussed the various rites for killing the enemies etc., with the necessary incantations and medicines.

*Another work connected.*

"शुक्लमाषाष्टसंयुक्तां
कुर्यात् पुत्तलिकां शुभाम् ।
स्त्रीपुंसयोः स्वरूपेण
माने द्वादशके स्वके ॥"

(पृष्ठम् ८९.)

As the Prayogas of the Mantras begin in such a manner it is but proper to call it Puttalikāpañcavimśati. I don't consider that this work that by some chance has fallen in, is out of place in such a work as Haramēkhalā which abounds in so many diverse rites. Even though we were aware of the existence of such an interpolation, the Puttalikāpañcavimśati is published along with Haramēkhalā as there is striking coincidence between the two in the actual practice of the rites accompanied by medicinal applications. Besides no other manuscript copy of the work has been obtained as yet. It is hoped that Māhuka himself had such an idea of both being compiled together and our duty being just to preserve what exists it will not be improper to publish the work as it is.

The only original manuscript that forms the basis of the publication of this Haramēkhalā of invaluable merits was obtained from Brahmasri C. Narayanan Bhatatiri Avl. of Parambūrillom in Tiruvalla. The manuscript was very old written about 800 years before and was deplorably worn and unreadable. Sincerely thanking the generous owner of the manuscript, who gave it up for publication, I place the work before the enlightened public.

Trivandrum,
26-4-1112.

K. SĀMBAŚIVA ŚĀSTRĪ.

॥ श्रीः ॥

## अवतारिका ।

---

इयं हरमेखला नाम कापि रक्षामेखलैव लब्धजनुषाम् । न केवलमनया मानवाः किन्तु पश्वादयोऽपि रक्षणीया अभिमता इति महत्यस्या अधिकारव्याप्तिः । पञ्चपरिच्छेदीपरिपुटितात्माप्यसौ प्रथमस्य परिच्छेदस्यानुपलब्धेः

प्रकृतिः । प्रत्याशाबद्धमतिभिः प्रबलतरप्रयत्नमुखैः पूर्वमेव प्रकाशनाय नोपादायि । प्रयत्नवैफल्यमेवोदाहरता तु गच्छता कालेन स्थितपरिरक्षणधर्मणामस्माकमवश्यग्राह्यबहुसारसम्पुटेयमचिरप्रसिद्धीकृतिं प्रत्यैक्षिष्ट । फलमिदमस्याः प्रतीक्षाया यत् साम्प्रतमयमाविर्भावः प्रथमभागस्य । अत्र द्वितीयादितस्तुरीयान्तास्त्रयः परिच्छेदा घटिताः । ते च — रिपुदमनः विदग्धदयितः (वशीकरणयोगः) चिकित्सितयोगः इति यथाक्रमं सामान्येन प्रमितप्रमेया दृष्टाः । प्रतिपरिच्छेदगतसर्वांशसङ्ग्रहणसश्रद्धा कापि विषयानुक्रमणी च समायोजितेह मन्ये प्रतिपत्तॄणां सौकर्यमावहति । क्वचन मोहोत्पादकधूपविशेषादिभिः, कुहचन परगजदर्पनिवारणादिभिः, कुत्रचिन्मशकमत्कुणादिनाशोपायैः, क्वापि च भुवनवशीकरणादिभिः, एकतश्च ग्रहबाधापरीहारादिभिः, अन्यतः प्रमेहादिनिवारणचिकित्सितैरन्यैरन्यैश्च विविधकार्यसमर्पणप्रवणैः प्रतिपाद्यैरियं मेखला, न तन्त्रस्य, न वा मन्त्रस्य, नापि चिकित्सितस्य, नचापि लोकयात्रानियमस्येति सर्वसारसमुच्चयग्राहिका न विविच्य विषयतो नामग्राहं शक्यग्रहा भवति । अत एवोच्यतेऽन्ते "एषा हरमेखला प्रयोगमाला रचिते"ति । तस्मात् प्रयोगमालापरनामेयं हरमेखलेति ज्ञायते ॥

प्राकृतमयीभिर्मूलकारिकाभिः संस्कृतमयीभिश्छायाभिः संस्कृतभाषाटीकया च कयाचन कृताकृतिरियं मेखला जिघृक्षवे सुग्रहा प्रकाशते ।

आकृतिः । प्राकृतसंव्यवहारे प्रचुरप्रचारे जाग्रति विरचिता समयान्तरे संस्कृतच्छायाटीकाभ्यां कृतविष्टम्भा तामिमामाकृतिं प्रतिपद्येति विचिन्तनीयेयमात्मनः प्राक्तनतामभिव्यनक्ति । प्राकृतादेव संस्कृतमिति तु निश्चप्रचं चरित्रकाराणाम् ॥

ग्रन्थसमाप्तौ —

"धरणिवराहरज्जे
कविमण्डणतणअमाहवसुएण ।
रइआ चित्तउडे
माहुएण हरमेहला ॥ (प्राकृतम्)

धरणिवराहराज्ये
कविमण्डनतनयमाधवसुतेन ।
रचिता चित्रकूटे
माहुकेन हरमेखला ॥ (छाया)

माधवाख्यस्य तनयेन चित्रकूटे निवासिना माहुकाख्येनैषा हरमेखला प्रयोगमाला रचिता इति दृश्यमानाभिः पङ्क्तिभिरस्या मेखलाया निबन्धा कविमण्डनपौत्रो माधवपुत्रश्चित्रकूट-

ग्रन्थकार. ।

निवासी माहुक इत्यवगम्यते ॥

"एत्थरसाए असुत्ताए
समाहमासम्मि ।
सत्तमदिणे समत्ता
विअवद्धजणमुणिअपरमत्था ॥ (प्राकृतम्)

वत्सर(सु? श)तेष्वष्टसु
समाघमासस्य ।
सप्तमदिने समाप्ता
विदग्धजनज्ञातपरमार्था ॥ (छाया)

श्रीविक्रमादित्यकालात् सप्ताशीत्यधिके धर्मशताष्टगते माघसप्तम्यामेषा हरमेखला व्युत्पन्नलोकैरेवावगततत्त्वा निष्पादिता ।"

जीवितसमयः ।

अनया मूलपङ्क्त्या छायया टीकया च विक्रमादित्यवत्सरेभ्यः सप्ताशीत्यधिकाष्टशताब्द्यामस्या मेखलायाः परिसमाप्तिं गमयन्त्या क्रिस्त्वब्दीय-नवमशताब्द्यस्य माहुकस्य जीवितसमयः प्रत्येतव्यः । सिद्धमेतावता प्राचीनत्वमस्यानुगुणमस्मदधिकरणप्रकाश्यताभूषणम् ॥

व्याख्यातुश्च देशनामधेयादिकं न किमप्युपक्रमामहे ग्रन्थात्, न वा सूचिकान्तरेभ्य इति सिद्धमपूर्वविज्ञातं गौरवमस्य छायाकरणे

विवरणकरणे च । अन्यैरयमनेन चान्ये ग्रन्थकारा नाम्मारिषतेति फलमिद चित्रकूटनिवासस्य समनुगुणस्य तपसश्चेति सम्प्रत्युभयप्रकाशाय कृतभाग्य-मस्मदाधिकरणं मन्ये धन्यधन्यम् । अचिरेण च प्रचिकाशयिषितेऽस्य द्वितीय-भागे यच्च यावच्च शेषं विचारयितेति सद्यः सञ्जातकुतुकी विरमामि ॥

अस्यां हरमेखलायां चतुर्थपरिच्छेदे एकाशीत्यधिकशततम्याः कारि-

अनुबद्धं ग्रन्थान्तरम् । काया: समनन्तरं कियत्यपि ग्रन्थपाते किमपि ग्रन्थान्तरं प्रत्यक्षीभवति, यत् पुत्तलिकापञ्चविंशत्यभिधानम् । यत्र मन्त्रसंयुक्तैरौषधैर्विविधां प्रयोगपरिपाटीं प्रपन्नैः शत्रुमारणादिकं साध्यते ॥

"शुक्लमाषाष्टसंयुक्तां
कुर्यात् पुत्तलिकां शुभाम् ।
स्त्रीपुंसयोः स्वरूपेण
माने द्वादशके स्वके ॥" (पृष्ठम् ८९.)

इति मन्त्रोपक्रमदर्शनाद् युक्तमिदमभिधेयं पुत्तलिकापञ्चविंशतीति । बहुप्रयोगसंरम्भसम्मिश्रितेऽस्मिन् हरमेखलाग्रन्थे मन्ये पातपतितमपीदं नास्थाने । औषधोपयोगिमान्त्रिकप्रयोगस्योभयतः साम्याद् विज्ञातमपि प्रागेव, मातृकान्तरानुपलम्भादुपाहितग्रन्थान्तरसाहाय्यकस्य मातृकसङ्कलनापातितत्वशङ्कयापि यथास्थितमेव प्रकाश्यमानमिदं पुत्तलिकापञ्चविंशत्याख्यं भवत्यनागसे स्थितपरिपालनाक्षतेः ।

अस्या हरमेखलाया विशिष्टगुणभूषणाया एवं प्रकाशनेऽवलम्बभूतो मातृकाग्रन्थः तिरुवल्ला परम्पूरिलं ब्रह्मश्री सि. नारायणन् भट्टतिरिस्वामिकः जरत्तमतमो माकीमष्टशताब्दीपर्युषितोऽक्षरैः प्रायः सक्षरैरेव खिलपातबहुलै-रद्वितीयः । तमिमं ग्रन्थं प्रसाधनाय समर्पितवतेऽस्मै ग्रन्थस्वामिने बहून् धन्य-वादानुपहरन्नासि मेखलां महाजनसमक्षमवतारयामि ॥

अनन्तशयनम् ,
२९. ४. ११२.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणिका ।

| विषय.. | पृष्ठम्. |
| --- | --- |

॥ श्रीः ॥

# हरमेखला

## सटीका ।

---

अथ द्वितीयः परिच्छेदः ।

**खळखुट्टवअणा कज्जसज्जणब्भत्थणा विणिमवि+अम् ।**
**कुट्टणिवरसुहाणविळम्बणाहिआरं णिसामेह ॥ १ ॥**

खलकुट्टिनीप्रजुघा(?)विलम्बनाधिकारं निशामयत ।

द्वितीयस्याधिकारस्य रचने हेतुः फलं च गाथयानया प्रतिपादितमिति ॥ १ ॥

**समघअमहुहरिअपईवगहिअकज्ज(ळ)विमिस्सिआ दि-[ण्णा ।**
**खुट्टीण कुणइ मइरा म(अअ?हामअं) जम्मपेरन्तम् [॥ २ ॥**

समघृतमधुभरितप्रदीपगृहीत(कज्जलवि)मिश्रि(तं? ता) द-(त्वा? त्ता) ।

कुट्टनीनां करोति मदिरा महामदं जन्मपर्यन्तम् ॥

तुल्यमात्रा(भ्यां) क्षौद्रघृताभ्यां पूरितो यः प्रदीपः ततो गृहीतेन कज्जलेन संयुक्तः सुराद्यासवः पानाय दत्तः क्षीर्णं महान्तं मदमुत्पादयतीति ॥ २ ॥

**समहुघअतिमितिळभरिअणाइं खदित्तकत्तीइ ।**
**कुट्टीण देहकाले कुणस अण्ड वणम्मइरा ॥ ३ ॥**

समधुघृततिमितैलभरितप्रदीपकान्त्या ।

कुट्टनीनां दीर्घकालं करोति मनस्तापि ॥

G. P. T. 680. 500. 29-9-1104. B

.... .... पूर्वोक्तद्रव्याभ्यां सममात्रेण मत्स्यानुकाथस्नेहेन पूरितस्य प्रदीपस्य समृद्धा ये .......... सुराद्यासवमुक्तं कार्यं करोति । अत्र द्रव्याणि सममात्राणीति ॥ ३ ॥

**तम्माघअं सळोणं दसाहमेक्कं वराहरसअं वा ।**
**पाऊण मुञ्च(इ मअं) छाअच्छीरं व णासाइ ॥ ४ ॥**

**ताम्राघृतं सलवणं दशाहमेकाहं (वा ? वरा) हरसकं वा ।**
**पीत्वा मुञ्चति मदं छागक्षीरं वा नासिकया ॥**

पूर्वोक्तभागद्वयेनारभ्य मदनेन प्रयोगत्रयेण निवर्तते । ताम्रागोघृतसैन्धवसंयुक्तमथवा छागक्षीरं दश दिनानि नस्येनोपयुज्यत इ(त्य)र्थः ॥ ४ ॥

**धवळहयमारमूलं रम्भाकुसुमाइ बिळइहळमज्जा ।**
**दिण्णो भोअणसमए खळकुट्टणीअण वमइ ॥ ५ ॥**

**धवलहयमार(मूलं रम्भाकुसुमानि) बिल्वफलमज्जा ।**
**दत्तो भोजनसहितं खलकुट्टनीजनं वमयति ॥**

श्वेतस्य हयमारस्य करवीरस्य मूलम् । रम्भा कदली तत्पुष्पाणि बिल्वमज्जा च एतत्संयुक्तभोजनेन सह दत्तं छर्दयतीति ॥ ५ ॥

**सरकेण व वाणेण व दिण्णं तम्बोळमीसिअ ।**
**अहवा कंगुष्ठं अविणअकुट्टणीओ दिअहे विरेएइ ॥ ६ ॥**

**सरकेन वा पानेन वा दत्तं ताम्बूलमिश्रितम् ।**
**अथवा कङ्गुष्ठं (स ? अ)विनयकुट्टनी(दि ? दिं)वसे विरेचयति ॥**

सरकमकृत्रिममद्यादि । पानं कृत्रिमं सुरादि । काङ्गुष्ठं तिक्तदुग्धिका । शिष्टं स्पष्टम् ॥ ६ ॥

**च्छीरल्लिळदुद्धमीसिअरोहिअपीएहिं ।**
**..................................... ॥ ७ ॥**

**(खीरल्लिळ ? क्षीरवल्ली)दुग्धविमिश्रितरूषिकाबीजैः ।**
**गुळसनाथैर्भवति रुधिरातिसारः ॥**

खादनेन वा दत्तैः क्षीरवल्लीसुधाक्षीरात् क्षीरेण विमिश्रितेन रुधिरकस्यार्कवृक्षस्य बीजैर्गुलसंयुक्तैः । शिष्टं स्पष्टम् ॥ ७ ॥

**पसाडकत्तिणिहित्ते तंबोले कुट्टणीणं मुहरोओ ।**
**ता होइ जा ण मुच्चइ विभवड्ढिअहिअअपरिओसो ॥८॥**

स्थूलकृकलासकृत्तिनिहिते ताम्बूले कुट्टनीनां मुखरोगः ।
तावद् भवति यावन्न मुच्यते विभवर्द्धितहृदयपरितोषः ॥

सरलः कृकलासः प्रशब्दो विशेषणे तच्चर्मणि यदीयास्ताम्बूलवीटा निबध्यन्ते तस्य तावन्मुखरोगो भवति यावत् पुनर्न मुच्यते। (युक्ते तु न? मुक्ते तु) निवर्तत इति ॥ ८ ॥

**भल्लाअअकट्ठकरण्डअम्मि आमेळपूरिए जस्सह ।**
**अहिवअणे व णिहिप्पइ मुहरोओ तस्स संभवइ ॥ ९ ॥**

भल्लातककाष्ठकरण्टके आवेतपूरिते यस्य ।
अहिवदने वा निधीयते मुखरोगस्तस्य (स?) सम्भवति ॥

भल्लातकस्यारुष्करस्य सम्बान्धि(नो) दारुणः सम्बान्धि यत् समुद्गादि तत्र घृतसर्पमुखे वा यस्य सम्बन्धी तन्मूला पीडा धारा सपीडः पत्रिकाधटक(?) इति प्रसिद्धो निक्षिप्यते तस्य मुखरोगो जायत इति ॥ ९ ॥

**वग्गलिवअणणिहित्ते तंबोले वेरिणो महाघोरो ।**
**घोणसमुहविच्छूढे दन्तधावणे होइ मुहरोओ ॥ १० ॥**

वल्गुलिवदननिहिते ताम्बूले वैरिणो महाघोरः ।
गोन(समुखवि)न्यस्ते दन्तपवने भवति मुखरोगः ॥

वल्गुलिश्चर्मशकुनिः । वृक्षदलतले क्वचित् प्रसिद्धः । तन्मुखे यदीयस्ताम्बूलापीडो न्यस्यते तस्य मुखरोगो भवति । तथा गोनासमुखे यच्चर्वितं दन्तधावनं न्यस्यते तस्या मुखरोगो जायत इति ॥ १० ॥

**कणअसिहिणिमिअमहुअरधूमाऊरिअकुटोअरणिहित्तम् ।**
**कुणइ जळं दिण्णं कुट्टणीण मोअत्तणमसज्झम् ॥ ११ ॥**

कनकशिखिनिर्मितमधुकरधूमापूरितकुटोदरन्यस्तम् ।
करोति जलं दत्तं कुट्टनीनां मूकत्वमसाध्यम् ॥

कनको मातुलुङ्गम्। तत्काष्ठजन्मोपरि निक्षिप्तभ्रमरशरीरजेन धूमेनापूरितस्य घटस्य कुक्षौ निक्षिप्तं यज्जलं तत् पीतमसाध्यं वाग्वैकल्यं करोति॥११॥

**माळइपसूअकअवासकुम्भपरिवसिअसलिळम् ।**
**सुप्पसइसोअत्तणमिणमो दुद्धरं पि सत्ताहमत्तेण ॥ १२ ॥**

मालतीप्रसूनानि सुमनःपुष्पाणि तैः कृताधिवासो यो घटः तत्परिवसितजलं सूत्रपर्युषितं रात्रिमेकां स्थितं मदिति (?) ॥ १२ ॥

**चण(ब ? ग)हि समं खइआ पाउं दिण्णअ्वसेअजळेण ।**
**अह कुणइ कुट्टिआ कुट्टणीण कडिपवणम् ॥ १३ ॥**

चणकैः समं खादिता पातुं दत्ता वासितजलेन ।
अथ करोति कुम्भीका कुट्टनीनां कटिपवनमतिमुखरम् ॥

कुम्भीका ओषधिविशेषः ॥ १३ ॥

**मा + ह्ल जे भमन्ति सळिळोपरि मुडफुळ्ळआ ।**
**कसणा भसगह्ल अच्च तारुअ इत्ति पसिद्धिआ ॥ १४ ॥**
**इक्को कीडोळ्ळआण ताणअ मुण्डिअदेहओ दिण्णो ।**
**मह चुण्णइण काडिमारुअञ्ञापओ ॥ १५ ॥**

अतित्वरिततरं ये भ्रमन्ति सलिलस्योपरि सूक्ष्माः ।
कृष्णा भ्रमरा इव तारुका इति प्रसिद्धाः ॥
एकः कीटानां तेषां चूर्णीकृतदेहो दत्तः ।
सह चूर्णेन कटीमारुतो एकः (?) ॥

ये लघुप्रमाणाः कृमिविशेषाः जलस्योपरि चतुरं कृत्वा कृष्णवर्णाः भ्रमन्ति तेषां मध्यादेकः सुपिष्टशरीरस्ताम्बूलरागे सहदत्तः पूर्वोक्तं कार्यं करोति ॥ १४, १५ ॥

**सरडिन्दिन्दिरविजरपुअचुण्णभिक्केसु होइ अङ्गेसु ।**
**खळकुट्टणीण कुट्ठं सवेअणं कण्डुसञ्जुत्तम् ॥ १६ ॥**

सरडिन्दिन्दिरवृश्चिकचूर्णस्पृष्टेषु भवत्यङ्गेषु ।
खलकुट्टनीनां कुष्ठं सवेदनं कण्डूसंयुक्तम् ॥

कृकलासभ्रमरवृश्चिकानां शरीरचूर्णेन यस्य गात्रं लिप्यते तस्य यथोक्तं कार्यं करोति कुष्ठं जनयतीति ॥ १६ ॥

---

अस्य छाया मातृकायां नोपलभ्यते ।

**फणिनो घरगोहाइव मुहम्मि सत्ताहसण्ठिआ गुञ्छा ।**
**खइआ जणेइ कुट्ठं चार जइन्त समुप्पुसइ ॥ १७ ॥**

फणिनो गृहगोधाया मुखे सप्ताहसंस्थिता गुञ्जा ।
खादिता जनयति कुष्ठं चारं तत्समुत्पुंसयति ॥

गुञ्जारक्तिकां सर्पस्य मुखोदरे वा, गृहगोधाया वा कुटमत्स्य इति प्रसिद्धः कृमिविशेषस्तु वा, मुखे सप्तमात्राणि दिनानि निक्षिप्ता (उ? भु)क्ता सती कुष्ठं जनयतीति । तत् कुष्ठं चारस्य प्रिया इदमस्य फल .... उपयुक्त (?) सन्निधारयतीति ॥ १७ ॥

**सिद्धत्था अहिमुहम्मि क(द्द)मकअपरिवारअ पेक्का ।**
**णिधूमधोरिदारुसमुब्भवजळणणिक्खित्ता ॥ १८ ॥**
**सअणअळपिप्फं समुग्ग...... ..... ... ........आ ।**
**खळकुट्टि(णी)अणं खपिन्ति कद्दमपरिअररहिआ ॥ १९ ॥**

सिद्धार्था अहिमुखे कर्दमकृतपरिवारके पक्के ।
निर्धूमकदलीदारुसमुद्भवज्वल(न)निक्षिप्ताः ॥
शयनतले स्पर्शसमुद्गतस्फोटकाम् ।
खलकुट्टनीजनं क्षपयन्ति कर्दमपरिकररहिताः ॥

सिद्धार्थाः सर्षपाः सर्पस्य मुष्टत्यादयस्तं? क्षपयन्ति यदि पक्केनासौ सर्वाङ्गीणकृत(कृत?)परिकरे दत्तलेपो भवति । तस्मिन् दत्तकृतस्य(?) स्फोटाः शाम्यन्तीति युगलकम् ॥ १८, १९ ॥

**भल्लादअरसकविअच्छुरोमहि जीअहरजळणगुञ्जाहि ।**
**भिक्कम्मि होइ अंगे लूआ खरदिणअरे काळे ॥ २० ॥**

भल्लातकरसकपिकच्छुकरोमजीवहरज्वलनगुञ्जाभिः ।
स्पृष्टे भवत्यङ्गे लूता खरदिनकरे काले ॥

भल्लातकम् आरुष्करम् । कपिकच्छुरोमाण्यात्मगुप्तापर्णानि । जीवहरं विषम् । ज्वलनः चित्रकः । गुन्जा रक्तिका । एतैर्द्रव्यैः समैः कृतेन चूर्णेन स्पृष्टेऽङ्गे ग्रीष्मकाले लूता जायन्ते इति ॥ २० ॥

तत्प्रत्यानयनमाह —

**सा धारितं ण जीवइ सामारुणमळअचन्दतअरेहि ।**
**वि लूआ (?) पसरन्ती मन्तसहिएहि ॥ २१ ॥**

सा धारयितुं न पार्यते श्यामारुणमलयचन्द्रतगरैः ।
कुष्ठोशीराभ्यां पीनाः (?) प्रसरन्तीति मन्त्रसहितैः ॥

सा लूताः प्रसरन्तीति वर्द्धमा(?)वारयितुं न शक्यते वक्ष्यमाणमन्त्रसहितैरेतैर्द्रव्यैर्विना । कैः । श्यामा गन्धप्रियङ्गुः । अरुणं कुङ्कुमम् । मलयं चन्दनम् । चन्द्रः कर्पूरः । तगरं जिह्मम् । कुष्ठं वाप्यम् । उशीरमभयम् । एतैर्लेपपानादिना प्रयुक्तं निवर्तत इति । मन्त्रो यथा — 'ओंनम उड्डामेश्वराय कुहरि कुन्दरि ठठ' । एते(न) मन्त्रेणाभिमन्त्रितानि श्यामादीनि पूर्वोक्तप्रयोगोत्पन्नाया लूताया निवारणमित्यर्थः ॥ २१ ॥

**सरळस्साहिपइस्स व सोणिअरत्तम्मि लंघिए सुत्ते ।**
**महिळाण गळइ रुहिरं पिच्छोइयअ ळंघिए ठाइ ॥ २२ ॥**

सरलस्याहिपतेर्वा शोणितरक्ते लङ्घिते सूत्रे ।
महेलानां गलति रुधिरं प्रक्षालिते लङ्घिते तिष्ठति ॥

सरलस्य कृकलासस्य अहिपतेः शोणितेन रुधिरेण रक्ते लिप्ते सूत्रे लङ्घिते सति महेलानां लङ्घयित्रीणां शोणितं गलति रजः स्रवति । तस्मिन् पूर्वप्रक्षालिते ततो लङ्घिते तद् रक्तं तस्या निरुध्यत इत्यर्थः ॥ २२ ॥

**वणमूसअखळ्ळाविणिहिम्मि कइतन्तिगाढबद्धम्मि ।**
**खुट्टीण मळणिरोहो (हो)इ पुरीसम्मि हट्ठि सहा ॥ २३ ॥**

वनमूषिकचर्मनिपीडिते कपितन्त्रीगाढबद्धे ।
कुट्टनीनां मलनिरोधो भवति ... ............ ॥

तन्मुक्तौ गच्छति सममिति निवर्तत इति (?) ॥ २३ ॥

**गोसळिळपिट्ठवग्गुलिमळळित्तसरावथइअवच्चस्स ।**
**णवास्स मळणिरोहो होइ महादुःखसञ्जणणो ॥ २४ ॥**

गोसलिलपिष्टवल्गुलिमललिप्तशरावस्थगितवर्चस्कस्य ।
वैरिणो मलनिरोधो भवति महादुःखसञ्जननः ॥

गोमूत्रेण पिष्टं वल्गुलेस्तरुचर्मशकुनेः पुरीषं तेन लिप्तं यच्छरावं तेन स्थगितं वर्चो यस्य तस्य तीव्रव्यथो मलनिरोधो भवति । शरावापासनेन निवर्तत इति ॥ २४ ॥

**तरुदेवउलाळयचम्मसउणिमळलित्तमळअणिरुद्धे ।**
**होइ पुरीसम्मि फुडं रिउणो मळमारुअणिरोहो ॥ २५ ॥**

**तरुदेवकुलालयचर्मशकुनिमललिप्तमल्लकनिरुद्धे ।**
**भवति पुरीषे स्फुटं रिपोर्मलमारुतनिरोधः ॥**

वृक्षे देवकुले वा यश्चर्मशकुनिः सनीळो निवसति तस्य संबन्धिना शकृता लिप्तेन शरावेन निरुद्धं स्थगितं यस्य मलं स्थाप्यते तस्य दुःसहव्यथो मलनिरोधो भवति तन्मुक्तौ ग्रन्थौ स निवर्तत इति ॥ २५ ॥

**ताळहडकत्तिणिक्खित्तणिविडसञ्जमिअमुत्तपंकेण ।**
**खलकुट्टणी किळमइ मोत्तणिरोहाउळा सुइरम् ॥ २६ ॥**

**तालहडकृत्तिनिक्षिप्तनि(मि ? बि)डसंयमितमूत्रकर्दमा ।**
**खलकुट्टनी क्लाम्यति मूत्रनिरोधातुरा सुचिरम् ॥**

तालहडस्य वनमूषिकस्य चर्मणि दृढबद्धो मूत्ररजःपङ्को यस्याः स मूत्रनिरोधातुरा क्लान्ता भवतीति ॥ २६ ॥

**रिट्ठण्डअरसगुण्ठिअमळ्ळअथइअम्मि हिण्डइ पुरीसे ।**
**णहचञ्चुहणणपावडवाअ(स)णि(उ)रुंबखज्जन्तो ॥ २७ ॥**

**रिष्टाण्डकरसरूषितमल्लकस्थगिते हिण्डाति पुरीषे ।**
**नखचञ्चुहननव्यापृतवायसनिकुरुम्बखाद्यमानः ॥**

रिष्टः काकः । तदण्डान्तर्वर्तिना रसेन कललेनाक्षिप्तो यः शरावस्तेन स्थगितं पुरीषं यस्य स (स बे ?)हिण्डति व्रजति । नखचञ्चुघातव्यग्रैर्भक्ष्यमाणो भवतीति ॥ २७ ॥

**लिहिऊण ज(ण ?)स्स णामं चूअदळे कसणरिट्ठरुहिरेण ।**
**कीरइ पुरीसमज्झे सो खज्जइ काकणिवहेण ॥ २८ ॥**

**लिखित्वा यस्य नाम चूतदले कृष्णरिष्ट(क ?)रुधिरेण ।**
**क्रियते पुरीषमध्ये स खाद्यते काकनिवहेन ॥**

यस्यार्द्रपत्रे कृष्णवायसरक्तेन नाम लिखित्वा तत्पत्रं शकृन्मध्ये स्थाप्यते स काकसङ्घैर्भक्ष्यत इति ॥ २८ ॥

**विच्छअकण्टअमहिए मअणफळान्तळिळविणिहिए [होइ ।**
**विसमं पर(ह ? ङ्ग) दुःखं महिळाणं मुत्तचिक्खिळळो [॥ २९ ॥**

वृश्चिककण्टकसहिते मदनफलेऽन्तर्विनिहिते भवति ।
विषमं वराङ्गदुःखं महेलानां मूत्रकर्दमे ॥

स्त्रीणां स्वमूत्रोत्पन्ने पङ्के एवंविधे क्रियमाणे दुःसहयोनिवेदना भवति। कीदृशे । वृश्चिकस्य सम्बन्धि यत् कण्टकं येनासौ दशति तत्संयुक्ते मदनफलस्यान्तर्निक्षिप्त इति ॥ २९ ॥

**विच्छअकण्टअविद्धं खळकुट्टणिपुरिसमद्दअसणाहम् ।**
**कुणइ कुसारणिहित्तं वराङ्गदुःखं महाघोरम् ॥ ३० ॥**

वृश्चिककण्डकविद्धं खलकुट्टनी(पु)रीपमार्द्रकसनाथम् ।
करोति भूतलगर्भनिहितं वराङ्गदुःखं महाघोरम् ॥

स्त्रीणां पुरीषमेवं क्रियमाणं तासामेव घोरां योनिव्यथां करोति । कथं क्रियमाणम् । वृश्चिककण्टकेन विद्धं तथार्द्रकेण सनाथं तादृ(शेन ? शं) सद् भूतलगर्भन्यस्तमिति । खलशब्दः कुट्टनीविशेपणं स्त्रीविषयत्वात् प्रयोगस्य ॥ ३० ॥

**दिअडोंबकाअकोसिअकइमज्जरछाअणउळरोमेहि ।**
**पच्छाइए पुरीसे रिउणो सम्भवइ उम्माओ ॥ ३१ ॥**

द्विजटोम्बकाककौशिक(कपि)मार्जारच्छागनकुलरोमभिः ।
प्रच्छादिते पुरीषे रिपोः सम्भावत्युन्मादः ॥

द्विजटोम्बयोः केशौ काकोलूकयोः पक्षौ मर्कटादीनां रोमभिर्यस्य पुरीषमवच्छाद्यते तस्योन्मादो जायत इति ॥ ३१ ॥

**सुरगोवअभूअळआ(चु)ण्णं महिळाण छहइ जो गुज्झे ।**
**तस्सेअ तत्थ वसरो पडइ(ध)ओ सेसपुरुसाण ॥ ३२ ॥**

चूर्णं सुरगोप(क)भूल(त)यो॑र्महेलानां क्षिपति यो गुह्ये ।
तस्यैव तत्र प्रस(रः) पतति ध्वजः शेषपुरुषाणाम् ॥

सुरगोपकः इन्द्रगोपकाख्यः कीटः । (भूलता) गण्डूपदः । ध्वजं लिङ्गम् । शिष्टं गतार्थम् ॥ ३२ ॥

**वरडीघरचुण्णसणाहसलिलविच्छोलिए वरंगम्मि।**
**णरलिंगसंगमो महिलाणं महिअं विणा णत्थि ॥ ३३ ॥**

**वरटीगृहचूर्णसनाथसलिलप्रक्षालिते वराङ्गे ।**
**नरलिङ्गसङ्गमो महेलानां मथितं विना नास्ति ॥**

वरटी क्षामोदरी, तस्या गृहमास्पदं, तच्चूर्णेन संयुक्तं यज्जलं तेन प्रक्षालिते गुह्ये स्त्रीणां पुंश्चिह्नेन सङ्गमो नास्ति यावन्मथितदध्ना तत्र पुनः प्रक्षालितमिति ॥ ३३ ॥

**अविणट्ठसिप्पिसंपुटलेवो थंभेइ कामिणिवरंगं ।**
**सुरभिस*लि(ळरसे ? ळा)भिसेओ पुणो वि (उ)त्थंभणं [कुणइ ॥ ३४ ॥**

**अविनष्टशुक्तिसंपुटलेपः स्तम्भयति कामिनीवराङ्गम् ।**
**सुरभिमथिताभिषेकः पुनरप्युत्तम्भनं कुरुते ॥**

अविनष्टः अविघटितो यः शुक्तिसम्पुटः अविश्लिष्टकपुटद्वयमित्यर्थः । तेना विश्लिष्टेन लेपः योनेः स्तम्भनं करोति सम्प्रयोगायोग्यतां करोति । तस्योत्तम्भनं निवारणं (म)थितगोदधिसेकः करोति । शुक्तिरत्र नदीसम्भवेति ॥

**होन्ति अहोमुत्तंमुहसुरभिविसाणग्गलेविए कमसो ।**
**महिलाण वरंगे रइणिरोहपसरा जहिच्छाइ ॥ ३५ ॥**

**भवतोऽधोमुखोन्मुखसुरभिविषाणाग्रलिप्ते क्रमशः ।**
**महिलानां वराङ्गे रतिनिरोधप्रसरौ यथेच्छया ॥**

स्त्रीणामधोमुखस्य गोशृङ्गस्य अग्रेण घृष्टेन योनिलेपे कृते रतिनिरोधः सुरतव्यापाराभावो जायते । ऊर्ध्वगतशृङ्गाग्रलेपे रतिप्रसरः पुनः सुरतयोग्यता प्रयोक्तुरिच्छावशाज्जायत इति ॥ ३५ ॥

**तंवाए बइल्लस्स व ओणअसिंगग्गलेविअं पडइ ।**
**उत्थाइ पुरुससाहणमुम्मुहसिंगग्गलेवेण ॥ ३६ ॥**

**ताम्राया बलीवर्दस्य वा अवनतशृङ्गाग्रलिप्तं पतति ।**
**उत्तिष्ठति पुरुषसाधनमुन्मुखशृङ्गाग्रलेपेन ॥**

गोर्दान्तस्य वा पूर्ववदधोमुखशृङ्गाग्रलेपे नरध्वजः पतति न रतिकार्यक्षमो भवति । ऊर्ध्वशृङ्गाग्रलेपेन पुनरुत्तिष्ठति रतिकार्यक्षमो भवतीति ॥ ३६ ॥

---

* 'महि आभि' इति तु व्याख्यानुसारीपाठः.

**गअणगहिअवग्गुलिपुरीसकअलिंगलेवेण रमिअ (?)।**
**अण्णेण सा णतीरइ सिविणेम्मि रमाविउं रमणी ॥ ३७॥**

**गगनगृहीतवल्गुलिपुरीषकृतलिङ्गलेपेन रमिता ।**
**अन्येन (सा) न शक्यते स्वप्नेऽपि रमयितुं रमणी ॥**

वृक्षचरस्य वल्गु(व ?)लेः चर्मचटकस्य गगनादेव गृहीतेन भूमिमप्राप्तेन शकृता कृतसाधनलेपेन पुरुषेण प्रयुक्तरता सा अन्येन पुरुषान्तरेण कथञ्चिद् रमयितुं न शक्यते ॥ ३७ ॥

**तञ्चेअ अदड्ढसरावपुडधूममच्छारणाइपरिपिट्टं ।**
**लेवेण पुरोपि करेइ रइघरुत्तंभमबलाणं (?)॥ ३८ ॥**

तदेव यथोक्तं वल्गु(व ?)लिपुरीषम् आमपात्रसंपुटादावर्तधूमतया दग्धं सत् पश्चान्निर्मलकाञ्जिकपिष्टं लिङ्गलेपेन प्रयुक्तं पूर्वप्रयोगकृतवराङ्गबन्धं स्त्रीणां निवारयतीति ॥ ३८ ॥

**बालेअवीअवट्टिअकरिकेसरलित्तलिंगरमिआण ।**
**रन्तुं रमणीण णरो तीरइ (?) अण्णो सअह्णो वि ॥ ३९ ॥**

**बालेयबीजवर्तितकरिकेसरलिप्तलिङ्गरमितानाम् ।**
**रन्तुं रमणीनां नरो न तरत्यन्यः सतृष्णोऽपि ॥**

खरजरसधातुभावितेन नागकेसरेण लिप्तलिङ्गो यः पुरुषः तेनारमिता याः स्त्रियस्तास्तदन्यः पुरुषः साभिलाषोऽपि रमयितुं न शक्नोतीति ॥ ३९ ॥

**होइ अहोमुहवसहसिग्गलेविए णाहिमण्डले महिला ।**
**बद्धवरंगा उम्मुहविसाणलेवं अवावन्ति ॥ ४० ॥**

**भवत्यधोमुखवृषभशृङ्गलिप्ते नाभिमण्डले महेला ।**
**बद्धवराङ्गा उन्मुखविषाणलेपं प्राप्नुवन्तीति (?) ॥**

अधोमुखस्य दा(रु ?)शृङ्गाग्रस्य निघर्षणेन लिप्ते नाभिमण्डले स्त्री स्तम्भितयोनिर्भवति । ऊर्ध्वमुखशृङ्गाग्रलेपं यदा नाभिमण्डले करोति तदा निवृत्तयोनिस्तम्भा भवतीति ॥ ४० ॥

---

अस्य छाया मातृकायां नोपलभ्यते ।

**वीअमळत्तअपडगाढवेढिअं सरळुविक्खतळणिहिअं ।**
**खट्टापादद्दळे वा णरस्स सण्ठत्तणं कुणइ ॥ ४१ ॥**

बीजमलक्तकपटगाढवेष्टितं शेलुवृक्षतलनिहितम् ।
खट्वापादतले वा (न्य? नर)स्य षण्डत्वं करोति ॥

पुरुषसम्बन्धि रेतः लाक्षारसरक्तवस्त्रनिबिडबद्धं शेलुवृक्षस्य श्लेष्मातकतरोरधस्तान्निक्षिप्तं तस्यैव वा पुरुषस्य सम्बन्धिन्याः खट्वायाः पादस्याधस्तान्निक्षिप्तं तस्य पुरुषस्य षण्डत्वं स्त्रीभोगाक्षमत्वं करोतीति ॥ ४१ ॥

**सोवण्णे तामरसे व्व भाअणे धोअमोत्तिअजळेण ।**
**पडिअं पि पुरुसळिंगं पुणोण्णअं होइ पीएण ॥ ४२ ॥**

सौवर्णे तामरसे वा भाजने धौतमौक्तिकजलेन ।
पतितमपि पुरुषलिङ्गं पुनरुन्नतं भवति पीतेन ॥

पूर्वोक्तयुक्तिप्रतिविधानमेतत् । रूप्यमये (ताम्रमये) वा भाजने धौतानि यानि मौक्तिकानि मुक्ताफलानि तत्सम्बन्धि यद् वारि तेन पीतेन सता षण्डीभूतोऽपि पुरुषः पुनः पुंस्त्वं लभत इति ॥ ४२ ॥

**छब्विन्दणिसाचुण्णं पसुवइसळिळेण साहिअं बहुसो ।**
**पाणम्मि भोअणे वा दिण्णं सण्ठत्तणं कुणइ ॥ ४३ ॥**

षड्बिन्दुनिशाचूर्णं पशुपतिसलिलेन भावितं बहुशः ।
पानेन वा भोजनेन वा दत्तं षण्डत्वं करोति ॥

षड्बिन्दुरिति बिन्दुषट्को विवक्षितः कृमिविशेषः क्षणिरिति क्वचित् प्रसिद्धः । (निशा) पिण्डहरिद्रा । पशुपतिसालिलं छागमूत्रं, तेन भावितं बहुशः शोधितं शुष्कं सदार्द्रीकृतम् । षण्डत्वं रतिकार्याक्षमत्वम् । शिष्टं स्पष्टम् ॥ ४३ ॥

**समतिळगोक्खुरचुण्णं छाअच्छीरेण साहिअं ससिअं ।**
**खइअं महुसञ्जुत्तं णइमो सण्ठत्तणं हरइ ॥ ४४ ॥**

समातिलगोक्षुरचूर्णं छागक्षीरेण साधितं ससितम् ।
खादितं मधुसंयुक्तमिदं षण्ड(करो? त्वं) हरति ॥

गोक्षुरकं श्वदंष्ट्रा, तच्चूर्णं तिलेन सममात्रं छागक्षीरेण पक्वं सितशर्करया सहितं शीतीभूतं माक्षिकेण सह भुक्तं पूर्वप्रयोगकृतं षण्डत्वमपहरतीति ॥४४॥

**करहड्ठिविवराणिहिआणरपरसुआकीळएण मिहुणस्स।**
**सअणासिरुदेसपरिट्ठिएण बन्धो रए होइ ॥ ४५ ॥**

करभास्थिविवरनिहितनरपरशुकाकीलकेन मिथुनस्य ।
शयनशिरोदेशपरिष्ठितेन बन्धो रते भवति ॥

करभास्थि उष्ट्रक(ङ्का)ळकं, तच्छिद्रे निक्षिप्तो योऽसौ पुरुषपरशुकाशङ्कुः, तेन मिथुनस्य स्त्रीपुंसयोः शयनशिरोभागे न्यस्तेन सुरतकाले बन्धः अन्योन्याविश्लेषः सम्भवतीति ॥ ४५ ॥

**कीळअकअगवअपुरीसगोळओ मिहुणतणिमविणिहित्तो।**
**कुणइ रए लिङ्गवरंगबन्धमोसारिओ मोक्खं ॥ ४६ ॥**

कीटककृतगवलपुरीषगोलको मिथुनशयनविनिहितः ।
करोति रते लिङ्गवराङ्गबन्धमपसारितो मोक्षम् ॥

गवलाः कीटाः कृमिविशेषाः, तैः कृतो (?) यः खण्डशः कृतः परिवर्तुलः पिण्डः स स्त्रीपुंसयोः शय्यायां निक्षिप्तः पूर्ववद् रते बन्धं करोति । अपसारितो बन्धनिवृत्तिं करोति । पूर्वगाथोक्तस्यापि बन्धस्यैवमेव निवृत्तिरिति ॥ ४६ ॥

***धवळघरगोळिआ(भुत्त)जिण्णणवणीअताळालित्तेण ।**
**हत्थेण हरइ जुवईपओहरे मुट्ठिबन्धेण ॥ ४७ ॥**

धवला यासौ गृहगोलिका कुड्यमत्स्य इति व्याख्याता, तया भुक्तं सज्जीर्णं यन्नवनीतं, तद्युक्तं यत् हरितालं तेन लिप्तकरो मुष्टिबन्धं कुर्वन् स्त्रीणां स्तनं हरति । उक्तेन द्रव्येण लिप्तहस्तः स्त्रीस्तनसाम्मुख्येन मुष्टिबन्धं कुर्वन् स्त्रीणां स्तनावदृश्यौ करोतीत्यर्थः ॥ ४७ ॥

**चिळ्ळ(अ)समिहट्ठसअं रिट्ठमहासउणसोणिआरुणिअं ।**
**णामेण (जाण) हुवइ ताण महावेरमुब्भवइ ॥ ४८ ॥**

चिल्लकसमिदष्टशतं रिष्टमहाशकुनशोणितारुणितम् ।
नाम्ना ययोर्हूयते तयोर्महावैरमुद्भवति ॥

चिल्लको वृक्षविशेषः तत्सम्बन्धिनीनां समिधामष्टोत्तरशतं काकोलूकस्य रक्तेन लिप्तं ययोर्नाम्ना हूयते तयोः परस्परद्वेषः उत्पद्यते । होमविधिस्तत्रान्तरा ज्ञेयः ॥ ४८ ॥

---

* अस्य छाया मातृकायां नोपलभ्यते ।

**डज्झन्ति जाण णामेण काअकाआरिपक्खपिञ्छाइ ।**
**पणअपरूढं पि खणेण ताण पेम्मं विसंघडइ ॥ ४९ ॥**

दह्यन्ते ययोर्नाम्ना काककाकारिपक्षपिञ्छानि ।
प्रणयप्ररूढमपि क्षणेन तयोः प्रेम विसंघटते ॥

ययोर्द्वेष्ययोर्नाम्ना वायसकौशिकपक्षाः पावकेन दह्यन्ते भस्मीक्रियन्ते, तयोरन्योन्यप्रणयस्थिरापि प्रीतिस्तत्काल एव निवर्तत इति ॥ ४९ ॥

**हअमहिसवसापूरिअपईवगहिअञ्जण(ञ्जिअ)च्छीणं ।**
**णिअजणणी वि विरज्जइ अइरा वड्ढन्तसन्तावा ॥ ५० ॥**

हयमहिषवसापूरितप्रदीपगृहीताञ्जनाञ्जिताक्षाणाम् ।
निजजनन्यपि विरज्यति अचिराद् वर्धमानसन्तापा ॥

अश्वस्य महिषस्य च सम्बन्धिन्या वसया स्नेहेन पूरितो यो दीपस्ततो गृहीतेन कज्जलेन रञ्जितनेत्राणां (यदह सन्धानेन तत्प्रयुक्तः?) स्वस्य मातापि सती तं प्रति विरागं भजते शीघ्रमेव वर्धमानानुशयेति ॥ ५० ॥

**थिरवेरजीअरुहिरेण जस्स मिहुणस्स णिंबपत्तम्मि ।**
**णामक्खराइ लिखन्ति ताण अ प(र)प्परं वेरं ॥ ५१ ॥**

स्थिरवैरिजीवरुधिरेण यस्य मिथुनस्य निम्बपत्रे(ण?) ।
नामाक्षराणि लिख्यन्ते तयोः परस्परं वैरम् ॥

परस्परं नित्यं वैरं नैसर्गिकत्वात्। यस्य युग्मस्य स्थिरमाजीवं विरोधः, तस्य काकोलूकस्य अश्वमहिषस्य वा अन्यस्य वा कस्यचिद् रक्तेन पिचुमन्दपल्लवे (ययोः) संज्ञावर्णा लिख्यन्ते तयोः परस्परं प्रति वैरं भवतीति ॥ ५१ ॥

**केसेहि दिआदिअम्बर मूसअमज्जाररोमसहिएहि ।**
**अद्दासु (क)ओ धूओ पिअविस्सेसं जणं कुणइ ॥ ५२ ॥**

केशैर्द्विजदिगम्बरयोर्मूषिकमार्जाररोमसहितैः ।
(आर्द्रासु कृतो) धूपः प्रियविश्लेषं जनं कुरुते ॥

ब्राह्मणक्षपणकयोः सम्बन्धिभिः केशैः, तथा उलूकवृषदंशयोः रोमभिः सहितैरार्द्रासु रौद्रनक्षत्रे कृतो धूपो यस्य विद्वे(ष? ष्य)स्य शरीरे वा समीपे वा दीयते तं प्रथमविद्वेष्यं करोतीति ॥ ५२ ॥

**सुरदारुतअरसुरसासुमुहप्पळगुळवआविसाणेहि ।**
**एसो पुणो पि णिद्धं करेइ मुणिणिम्मिओ धूओ ॥५३॥**

सुरदारुतगरसुरसा(सु)मुखफलगुळवचाविषाणैः ।
एष पुनरपि स्निग्धं करोति मुनिनिर्मितो धूपः ॥

सुरदारु देवदारु । तगरं कुटिलम् । सुरसा मञ्जाकम् (?) । सुमुखं बृहत्पत्रं तद्बीजानि । वचा उग्रगन्धा । विषाणं कुष्ठम् । एतैर्मुनिसंख्यैः सप्तभिर्द्रव्यैर्मुनिनिर्मितो मुनिभिस्तपोधनैः कैश्चित् प्रणीतोऽयं धूपो नष्टामपि प्रीतिं पुनरुत्पादयति । पूर्वोक्तप्रयोगप्रतिविधानमेतदिति ॥ ५३ ॥

**घेत्तूण जस्स णामे णिक्खिप्पइ हम्मिओअरे णिहुअं ।**
**मअण(र)चरणाअड्ढणरज्जू सो णूणमुव्व(ड ? स)इ ॥५४॥**

गृहीत्वा यस्य नाम निक्षिप्यते हर्म्योदरे निभृतम् ।
मृतनरचरणाकर्षणरज्जुस्तन्नूनमुद्वसति ॥

हर्म्योदरे उपरितनमन्दिरस्याभ्यन्तरे यन्नामग्रहणपूर्वकं परासुपुरुषपादाकर्षणदाम निक्षिप्यते तद्गृहमुद्वसतीति ॥ ५४ ॥

**अइरा वड्ढन्तुद्दामदुःखसन्दावक्खविअजणणिवहं ।**
**उव्वसइ घरं पुरिसट्ठिसंकुणा दारणिहिएण ॥ ५५ ॥**

अचिराद्वर्धमानोद्दामदुःखसन्तापक्षपितजननिवहम् ।
उद्वसति गृहं पुरुषास्थिशङ्कुना द्वारनिहितेन ॥

यस्य गृह(स्य) द्वारदेशे नरकीकसकीलको निखन्यते तद् गृहमुक्तविशेषणमुद्वसतीति ॥ ५५ ॥

**मज्झण्णलुढिअखरभूमिहाणे (?) वामहत्थणिहिएण ।**
**कुट्टणिघरम्मि कळहो अणुदिहअ अणुट्ठिअं होइ ॥ ५६ ॥**

मध्याह्नलुठितखरभूमिरजसा वामहस्तनिहितेन ।
कुट्टनीगृहे कलहोऽनुदिवसमनुष्ठितो भवति ॥

मध्याह्नकाललुठितः परिवर्तितशरीरः खरो रासभो यस्यां भूमौ तद्धूलिर्यस्मिन् गृहे वामहस्तेन गृहीत्वा क्षिप्यते (तत्र) सततं कलिर्भवति ॥ ५६ ॥

*हरदइअसहण्डिपुरीसहलिणिजीअहरविरइओ धूओ ।
मूळच्छरुहिरसहिओ जणेइ मोहं विअंहन्तो ॥ ५७ ॥

†हरदयित(?)शिखण्डिपुरीषः मयूरशकृत् । हलली लाङ्गली । जीवहरं विषम् । तैर्महिषरुधिरसहितैर्धूपो विजृम्भमाणः प्रसरन् मोहं निस्संज्ञत्वं करोतीति ॥ ५७ ॥

मूळच्छरुहिरकळपि(कि)अकणअपञ्चङ्गविसकळासहिओ ।
धूओ णिसासु मोहं जणेइ पुरमीसिओ दिण्णो ॥ ५८ ॥

सलाक्षा(?)रुधिरार्द्रीकृतकनकपञ्चाङ्गविषकलासहितः ।
(धूपो) निशासु मोहं जनयति पुरमिश्रितो दत्तः ॥

महिषरुधिरेणार्द्रीकृतानि कनकस्य कितवस्य यानि मूलस्कन्धपत्रपुष्पफलानि पञ्चाङ्गानि तैर्विषकलया विषस्य षोडशांशेन सहितः तथा गुग्गुलुना मिश्रितो निशासु प्रयुक्तो धूपो मोहं जनयतीति ॥ ५८ ॥

अजअरपुरीसधूओ तारा(?)जळुआबहळचुण्णधूओ वा ।
दिण्णो जणेइ मोहं ता जा रविदंसणं जाअं ॥ ५९ ॥

अजगरपुरीषधूपस्तृणजलौकोबहलचूर्णधूपो वा ।
दत्तो जनयति मोहं तावद् यावद् रविदर्शनं जातम् ॥

अजगरस्य सर्पस्य मांससम्बन्धिना शकृता कृतो धूप, तथा स्थूला(यां ?नां) जलौकसां कृमिविशेषाणां प्रभूतेन शरीरचूर्णेन कृतो यो धूपः, स प्रयुक्तः सन् आ सूर्योदयान्मोहं जनयति । तेन रात्रौ प्रयोक्तव्य इत्युक्तं भवतीति ॥५९॥

दिण्डुहतेळळुळळाळत्तवत्तिणिम्मिअपईवकन्तीए ।
हिस्स(स्स) होइ णूणं मइमोहो सअळळोअस्स ॥ ६० ॥

जलसर्पतैलार्द्रीकृतालक्तकवर्तिनिर्मितप्रदीपकान्त्या ।
स्पृष्टस्य भवति नूनं मतिमोहः सकललोकस्य ॥

जलसर्पशरीराद् गृहीतेन तै(ल ? लेन) सिक्ता यासौ लाक्षारसलिप्ता वस्त्रमयी वर्तिः, तया निर्मितः प्रज्वालितो यो दीपस्तस्य दीप्त्या स्पृष्ट(स्य) जन्तोश्चित्तमोहो जायत इति ॥ ६० ॥

---

* अस्य छाया मातृकायां नोपलभ्यते । † अस्यार्थो भ्रष्टः स्यात् ।

**गहिअं णच्चणविहिणा पुच्छं सरळीइ धूवजुत्तीए ।**
**णच्चावेइ जणं स हि पञ्चङ्गुम्मत्तअसणाहं ॥ ६१ ॥**

गृहीतं नर्तनविधिना पुच्छं सरल्या धूपयुक्त्या ।
नर्तयति जनं + + पञ्चाङ्गोन्मत्तकसनाथम् ॥

सरली प्राणिविशेषो धर्मनीति क्वचित् प्रसिद्धा । तस्या लाङ्गूलं पञ्चाङ्ग-मातुलसहितं नृत्यता पुरुषेण गृहीतं धूपयुक्त्या प्रयुक्तं सद् यं जनं प्रतियुज्यते तं नर्तयतीति ॥ ६१ ॥

**पुच्छं हाळाहळस्स जा फन्दइ विच्छिण्णअं ।**
**ता मुक्कणिअसणो हि णच्चिज्जइ सविळासअं (?) ॥६२॥**
**तं भवणप(व?)ईवस्स वत्तीमज्झणिहित्तअं ।**
**खळलोअं वत्तिआ णच्चावेइ च्छिवन्तअं (?) ॥ ६३ ॥**

पुच्छं हालाहलस्य (यव ? यावत्) स्पन्दते विच्छिन्नकम् ।
तावन्मुक्त(नि)वसनो नृत्यति सविलासकम् ॥
तद् भवनप्रदीपकस्य (वर्ति) मध्यनिहितम् ।
खललोकं कान्त्या(वर्त्ति) नर्तयति स्पृशन् ॥

हालाहलस्य प्राणहा इत्युक्तस्य प्राणिविशेषस्य पुच्छमुच्छिन्नं सद् याव-च्चलत् तिष्ठति तावद् दिगम्बरैः प्रयोक्तृभिः नर्तितव्यम् । ततो निवृत्तस्पन्दं तद् गृहीत्वा गृहप्रदीपकवर्त्तिमध्ये विक्षेप्तव्यम् । तत्कान्त्या लोकं संस्पृशन् नर्तयतीति ॥ ६२,६३ ॥

**जावअपडपरिवेढ्ढिअजळसप्पिणिचुण्णरइअवत्तीइ ।**
**कअगब्भपईवसिहा करेइ विणिअंसणं महिळं ॥ ६४ ॥**

यावकपट(परि)वेष्टितजलसर्पिणीचूर्णरचितवर्त्त्या ।
कृतगर्भप्रदीपशिखा करोति विगतनिवसनां महेलाम् ॥

लाक्षारञ्जितवस्त्रवलिता (या ?) यासौ जलसर्पिणी त(या ? स्या) जलौकसः शरीरचूर्णेन रचिता वर्तिस्तया कृतगर्भया ततो ज्वलिता दीपज्वाला स्त्रियं निजालोकस्पृष्टां दिगम्बरां करोतीति ॥ ६४ ॥

*वर्तिधूपप्रयोगा निवातभवनोदरे प्रयुज्यन्ते ।
निजरक्षा क्रियते गोघृतेन नासिकाया अभ्यङ्गम् ॥

वर्तीनां धूपानां प्रयोगाः वातरहितगृहाभ्यन्तरे प्रयुज्यन्ते । आत्मरक्षा च गव्यघृतेन घ्राणाभ्यन्तरलेपान्निवाते । येन प्रयोक्तुः प्रयोगफलमात्मनि न बाधत इति । अनेनोक्तवर्तीधूपप्रयोगाणामितिकर्तव्यतोक्तेति ॥ ६५ ॥

निहुडुंगिदुद्धभाविअलोइअतिलतेल्लमक्खिआ चिहुरा ।
णवणिग्गअकासपसूअसच्छहा होन्ति लोअस्स ॥ ६६ ॥

निहु(ड)ङ्गदुग्धभावितलुचित(?)तिलतैलभाविताश्चिहुराः ।
नवनिर्गतकाशप्रसूनसदृशा भवन्ति लोकस्य ॥

निहुडुङ्गी सुधावृक्षः तत्क्षीरेण भावितानामार्द्रीकृतानां ततः शुष्काणां तिलानां (सं)बन्धि यत् तैलं तेनाभ्यक्ताः केशाः शुक्ला भवन्तीत्युपमार्थः ॥६६॥

अक्खसिअकडुअदुद्धिअमज्झणिहिओ पक्खमेत्थपरिवासि-
लेवेण (कु)णइ तअरो चिहुरचअं ससिअरसरिच्छं ॥ [ओ ।

अत्रुटितकटुक(द्धि ? दुग्धि)कामध्यविनिहितः पक्षमात्रपर्युषितः ।
लेपेन करोति तगरश्चिहुरचयं शशिकरसदृक्षम् ॥

अत्रुटितायामेव स्थिता यासौ कटुदुग्धिका या तिक्तालाबुस्तुम्बिका तन्मध्ये तदभ्यन्तरे निक्षिप्तं सत् तत्रैव पक्षमात्रं पर्युषितं तगरं कुटिलं पिष्टं सत् तस्य लेपेन केशसमूहं शुक्लीकरोतीत्युपमार्थः ॥ ६७ ॥

आआसि(अ)धवलतुरंगमस्स सेओल्लिआ सिअं कुणइ ।
अहरं अलत्तओ ता जा ण लहइ (?) तमिस्सिआतेल्लं
[॥ ६८ ॥

आयासि(त)धवलतुरङ्गमस्य स्वेदार्द्रीकृतः सितं करोति ।
अधरमलक्तकस्तावद् यावन्न लभते तमिस्रातैलम् ॥

आयासितस्य बहुधायासितस्य श्वेताश्वस्य गात्रस्वेदेन आर्द्रीकृतः सन् लाक्षारसो लेपेनाधरं शुक्लीकरोति । तमिस्राबीजतैलेनैव पुनः प्रकृतिमापादयतीति ॥ ६८ ॥

---

* अस्य प्राकृतं मातृकायां नोपलभ्यते ।

**हरदइअकुसुमरअकुण्डिआण कुसुमाण पडइ गन्धेण ।**
**पअळं पावइ णरो सोवीर(अ)णामणे दिण्णे ॥ ६९ ॥**

हरदयितकुसुमरजोगुण्डि(तां ? तानां) कुसुमानां पतति गन्धेन।
प्रकृतिं प्राप्नोति नरः सौवीरकनावने दत्ते ॥

हरदयितो मातुलः तत्पुष्पमकरन्देन परिवलितानि यानि कानिचित् पुष्पाणि तेषामाघ्रायमाणेनामोदेन मोहाविष्टः पतति । सौवीरकं शैलाञ्जनम् । तेन नस्ये दत्ते स्वस्थो भवति ॥ ६९ ॥

**कुळिसतरुदुद्धभाविअपिप्पळिचुण्णेण चिहुरपब्भारो ।**
**णासइ मज्जणसमए आमळमज्झम्मि दिण्णेण ॥ ७० ॥**

कुलिशतरुदुग्धभावितपिप्पलिचूर्णेन चिहुरप्राग्भारः ।
नश्यति मज्जनसमये आमलकमध्ये दत्तेन ॥

कुलिशतरुः सुधावृक्षः तत्क्षीरभावितेन मागधिकातण्डुलचूर्णेन लिप्तः केशकलापो नश्यति उन्मूलयितुमायाति । स्नानसमये आमलकैः सह दत्तेनेति गोपनार्थप्रकारनिर्देश इति ॥ ७० ॥

***छीरळिळअदुद्धभाविअरोहिअतिमिपिसिअसाहिअं हरइ ।**
**तेळब्भंग(अ)विहिणा सहसच्चिअ रोमसंघाआ ॥ ७१ ॥**

क्षीरलतायाः सुधाक्षीरेण भावितं यत् तद् रोहितकाख्यस्य मत्स्य(स्य) मांसं तेन साधितं यत् तैलं तदभ्यङ्गे रोमाणि झटिति शातयति । साधनप्रकारो यत् साध्यते मांसं तच्चतुर्गुणं जलं क्राथयित्वा तैलमेव ग्राह्यमिति । अनुक्तसाधन-प्रकाराणामयमेव साधनविधिः प्रायेणेति ॥ ७१ ॥

**णासाणओज्झविणिहिअचुच्छुन्दरिचुण्णअम्मि णिव-[डन्ति ।**
**उट्ठन्ति मळअणावणपाणेण तुरंगमा तुरिअं ॥ ७२ ॥**

नासानिकुञ्जविनिहितचुच्छुन्दरीचूर्णे निपतन्ति ।
उत्तिष्ठन्ति मलयनावनपानेन तुरङ्गमास्त्वरि(ते ? तम् ) ॥

नासिकानिक्षिप्ते गन्धमूषिकाविवरचूर्णे सति अश्वः पतति । चन्दनेन दत्ते नस्यपाने त उत्तिष्ठन्तीति ॥ ७२ ॥

* अस्य छाया मातृकाया नोपलभ्यते ।

**विगअतुसकसणजीरअचुण्णञ्चिअलोअणा ण पेच्छन्ति ।**
**तह पुणो विअ(?) तुरंगमा तक्कहरिअच्छा ॥ ७३ ॥**

**विगततुषकृष्णजीरकचूर्णाञ्चितलोचनाः (न) प्रेक्षन्ते ।**
**ततः पुनरपि खलु तुरङ्गमास्तक्रभरिताक्षाः ॥**

निस्तुषीकृतं यत् कृष्णजीरकं कालोपकुञ्चिका तच्चूर्णेन दत्ताञ्जनानि नेत्राणि येषां तादृशाः सन्तो वाजिनोऽन्धीभवन्ति । ते पुनरपि तक्रेण गोरसेन पूरितनेत्राः सन्तः प्रेक्षन्ते निवृत्तान्ध्या भवन्तीति ॥ ७३ ॥

**णिअमअजलञ्जिअच्छो समरे सुरवारणं पि रभसेण ।**
**णासेइ गलिअदप्पं पत्तिअपडहो वि माअंगो ॥ ७४ ॥**

**निजमदजलाञ्जिताक्षः समरे सुरवारणमपि रभसेन ।**
**नाशयति गलितदर्पं प्रतीतिसूक्ष्मोऽपि मातङ्गः ॥**

स्वदानाम्भसा दत्ताञ्जननेत्रः कुञ्जरः ऐरावतमप्युद्योगेन प्रशान्तदर्पं करोति, किमुतान्यम् । अत्र प्रतीतिं प्रत्ययं भावयन् सूक्ष्मोऽपीत्यतिशयोक्तिरिति ॥ ७४ ॥

**करगहिअसुअन्धुन्दुरिचुण्णपहावा ण सम्मुहो होइ ।**
**आळाणं पि हु परिहरइ वारणो तेण कअळेवं ॥ ७५ ॥**

**करगृहीतसुगन्धोन्दुरीचूर्णप्रभावान्न सम्मुखो भवति ।**
**आलानमपि खलु परिहरति वारणस्तेन कृतलेपम् ॥**

सुगन्धोन्दुरी चुच्छुन्दरी तत्कायचूर्णस्य हस्तगृहीतस्य प्रभावाद् गजो न सम्मुखीभवति पलायत इत्यर्थः । तथा तेन चूर्णेन लिप्तमालानं बन्धनस्तम्भं परिहरति ततोऽपि पलायत इत्यर्थः ॥ ७५ ॥

**कर(ण)क्खत्तुप्पाडिअलंगिलिआकन्दलेविअसरीरो ।**
**भीमस्स (वि)भीमपरक्कमस्स दप्पं णरो हरइ ॥ ७६ ॥**

**करनक्षत्रोत्पाटितलाङ्गलिकाकन्दलेपितशरीरः ।**
**भीमस्यापि भीमपराक्रमस्य दर्पं नरो हरति ॥**

करनक्षत्रेण हस्तनक्षत्रेण उत्पाटितं यल्लाङ्गलीकन्दं फलिनीमूलं तेन पिष्टेन समालब्धसकलगात्रः पुरुषो भीमसेनस्यापि भीमपराक्रमस्य दर्पं (नरो ?) हरति । किमुतान्यस्येत्यतिशयोक्तिरिति ॥ ७६ ॥

चरणेण समं दिण्णं सुरवारुणिमूळविरइआ गुळिआ ।
चिरआळपोसिअस्स वि हरइ बळं तंबचूडस्स ॥ ७७ ॥

चरणेन समं दत्ता सुरवारुणीमूलविरचिता गुलिका ।
चिरकालपोषितस्यापि हरति बलं ताम्रचूडस्य ॥

चरणमाहारद्रव्यं तेन सह दत्ता यासौ सुरवारुण्या विशा(ल? ला)या मूलेन कृता गुलिका सा कुक्कुटस्य चिरकालपोषितशरीरस्यापि बलं शमयतीति ॥

मज्जारवसाळित्तो चम्मेण व तस्स धूविअसरीरो ।
जज्झम्मि तम्मचूळो णिहणइ पेळिअं पि पडिपक्खम् ॥

मार्जारवसालिप्त(स्य ? :)चर्मणापि तस्य धूपितशरीरः ।
युद्धे(त ? ) ताम्रचूडो निहन्ति बलिनमपि प्रतिपक्षम् ॥

मार्जारः वृषदंशः । तद्वसया लिप्तस्तथा तच्चर्मणा वा दत्तधूपः कुक्कुटो युद्धे बलाधिकमपि प्रतिपक्षकुक्कुटं निपातयतीति ॥ ७८ ॥

कळ्ळाळावणविणिहित्तबहुळतरुकामरुक्खफळअम्मि ।
सुरसा वि होइ मइरा सहस(स)च्चिअ कञ्जिअसरिच्छा ॥७९॥

क(ल्या ? ल्य)(बा ? पा )लापणविनिहितबकुलतरुकामवृक्षफ(ले?लके) ।
सु(रा ? र)सापि भवति मदिरा सहसैव काञ्जिकसदृक्षा ॥

कल्य(बा ? पा)लस्य सौनिकस्यापणे विक्रयस्थाने निक्षिप्ते बकुल(तरुकामवृक्ष)फलके केसरवृक्षे जातस्य वृक्षान्तरस्य वन्दाक इति प्रसिद्धस्य फलके सति तत्रापणे स्थिता सुरसापि सुरा काञ्जिकतुल्या भवतीति । तस्मिन्नुद्धृते प्रकृतिमापद्यत इति ॥ ७९ ॥

काऊण कइकवाले दुद्धंसकरञ्जवीअसञ्जुत्तं ।
जीए मइराए थोअं ताविज्जइ सूरकिरणेहि ॥८० ॥

सा गळिअणिअरसा ता ण मुञ्चइ+ अम्मिळत्तणमसेसं ।
जा तम्मि क(इ)अवाळे ण कअं जळमिस्सिअं दुद्धं ॥८१॥

कृत्वा कपिकपाले दुःस्पर्शकरञ्जबीजसंयुक्तम् ।
(यस्या) मदिरायाः स्तोकं ताप्यते सूर्यकिरणैः ॥
सा गलितनिजरसा (भा ? ता)वन्न मुञ्च(त्युष्ण ? त्यम्ल)त्वमशेषम् ।
(यदि ? यावत्) तस्मिन् कपिकपाले न कृतं जलमिश्रितं दुग्धम् ॥

युगलस्यायमर्थः — यस्याः सुरायाः क्वचिद् भाण्डकाद्यै स्तोकमुद्धृत्य (क ? म)र्कटशिरःकर्परे विनिक्षिप्तं सद् दुःस्पर्शकरञ्जस्य बीजैर्मिश्रितं च (भूरि ? सूर)किरणैस्तापितं क्रियते सा सुरा भाण्डस्थिता नष्टस्वरसा तावदम्लत्वं समग्रं न त्यजति, यावत् तस्मिन् कपिकपाले सजलं क्षीरं निक्षिप्यते । तस्मिंश्च निक्षिप्ते सा सुरा प्रकृतिस्था भवतीति । युगलकम् ॥ ८०,८१ ॥

**वाळेअरुहिररञ्जिअ(रू)विअसिचएण दारणिहिएण ।**
**कळ्ळाळावणमज्झट्ठिआ वि विरसा सुरा होइ ॥ ८२ ॥**

**बालेयरुधिररञ्जितरूपिकांशुकेन द्वारनिहितेन ।**
**कल्यपालापणमध्यस्थितापि (वि)रसा सुरा भवति ॥**

खररुधिरेणालिप्तं यद्रूपिकार्कवृक्षस्य सम्बन्धि कार्पासप्रायं फलं तद्गतं द्रव्यं तेन निर्मितं यद् वस्त्रं तेन सौनिकगृहद्वारस्थितेन सा विक्रयस्थानान्तर्गतापि सुरा विरसा भवतीति । वस्त्रापासने पुनः प्रकृतिमापद्यत इति ॥ ८२ ॥

**रअसङ्गमकामकिसोरवाळकडअम्मि भुजळआबद्धे ।**
**होइ दिअंबरळिंगं उद्ध(सा ? समा)रोविए थद्धं ॥ ८३ ॥**

**रतसङ्ग(म)कामकिशोरवालकटके भुजलताबद्धे ।**
**भवति दिगम्बरलिङ्गमू(र्ध्व)समारोपिते स्तब्धम् ॥**

करलग्नस्य वासस्थितस्य (?) कामकिशोरकस्य खरस्य पुच्छाद् वालाद् (रोमाणि) गृहीत्वा यः कटको निर्मितः तस्मिन् बाहुशिखरमानीते दिगम्बरस्य नग्नक्षपणकस्य ध्वज उत्थितो भवतीति । प्रयोक्त्रा तस्मिन् कटके बाहोराकृष्टे सति पुनः पततीति ॥ ८३ ॥

**सुरतट्ठिअखरपुच्छरुहगुप्पजंबुअपुरीसबदरेहि ।**
**करकडअमुद्धणीअं कडिळ्ळमवणेइ महिळाण ॥ ८४ ॥**

**सुरतस्थितखरपुच्छरुहप्रोतजम्बुकपुरीषबदरैः ।**
**(कर)कटकमूर्ध्वनीतमधोवस्त्रमपनयति महेलानाम् ॥**

पूर्ववत् खरपुच्छरोमाणि गृहीत्वा सृगालामेध्यनिष्क्रान्तैर्बदराण्डैः यत् कटकं विनिर्मितं तत् बाहुन्यस्तं पूर्ववदूर्ध्वनीतं सत् स्त्रीणामधरवसनमुत्क्षिपतीति ॥ ८४ ॥

**करदिअसगहिअमहिरोविआइ हलिणीइ मुद्दिओ वअइ।**
**गब्भो गब्भवईए ना जा मा णुक्खआ थद्धो ॥ ८५ ॥**

करदिवसगृहीतमही(रो)पितया हलिन्या मुद्रितस्तिष्ठति ।
गर्भो गर्भवत्या(स्तावद् यावत्) सा नोत्खाता ततः ॥

गर्भवत्या गर्भोऽन्तर्गतो जन्तुस्तिष्ठति न प्रवर्तते । कीदृशः सन् । हलिन्या लाङ्गल्या मुद्रितः स्तम्भितः । कीदृश्या सत्या । हस्तनक्षत्रयुक्तदिनकरगृहीतया तदनु (देवताया गर्भ. स्तब्धो भवतीति ।') तद्गृहभूमौ निक्षिप्तया । तावत् तिष्ठति, यावदसौ हलिनी भूमेः पुनर्नोद्धृता । उद्धृतायां तु गर्भः प्रवर्तते इति ॥

**महिसमहासउणामिससिद्धत्थ(अ)तेल्ळसाहिअं रसअं ।**
**जा भुञ्जइ गब्भवई तीए सुओ होइ जच्चन्धो ॥ ८६ ॥**

महिष(महा)शकुनामिषसिद्धार्थकतैलसाधितं रसकम् ।
या भुङ्क्ते गर्भवती तस्याः सुतो भवति जात्यन्धः ॥

महिषस्य शूलाक्षस्य तथा महाशकुनस्य कौशिकस्य च मांसेन तथा सर्षपतैलेन साधितं यूषं या भुङ्क्ते गर्भवती, सा जात्यन्धं सूत इति ॥ ८६ ॥

**होइ महाणम(वि?)णिहिए चिल्ळअभवकामरुक्खफळ-**
**[अम्मि ।**
**सिद्धं तित्तमसेसं पि भोअणं ओक्खए सुरसं ॥ ८७ ॥**

भवति महानसनिहिते चिल्लकभवकामवृक्षफलके ।
सिद्धं तिक्तमशेषमपि भोजनमुत्खाते सुरसम् ॥

चिल्लकं वृक्षविशेषः तदुद्भवस्य कामवृक्षस्य वृक्षान्तरस्य फलके पचनस्थानन्यस्ते तत्र सिद्धं सर्वमेव भोजनं तिक्तं सम्पद्यते । उत्खाते तु तस्मिन् मृष्टं भवतीति ॥ ८७ ॥

**सिसुमारट्ठिपरिट्ठिअवेतसतरुदारुमहणसंभूओ ।**
**जळसिच्चन्तो वि सिही पज्ळिज्जइ विज्जजळणो व्व ॥८८॥**

शिशुमारास्थिपरिस्थितवेतसतरुदारुमथनसम्भूतः ।
जलसिच्यमानोऽपि शिखी प्रदीप्यते विद्युज्ज्वलन इव ॥

शिशुमारो मत्स्यविशेषः तत्संबन्धिकीकसे निवेशितं यद्वेतसतरुदारु तन्मथनेन सम्भूतोऽग्निः जलेनाभिवृष्टोऽपि प्रज्वलति, नतु शाम्यति, विद्युदग्निवत् । स हि जलमध्ये ज्वलतीति ॥ ८८ ॥

**सलिलपवंग(विहंग)ट्ठिकखण्डकअमन्थणाहि उप्पण्णो ।**
**बाडवजळणो व्व जळे वि(जळइ)जळणो णिरासंको ॥८९॥**

सलिलप्लवङ्गविहङ्गास्थिखण्डकृतमन्थनादुत्पन्नः ।
बडबाज्वलन इव जलेऽपि ज्वलति ज्वलनो निराशङ्कः ॥

जले प्लवङ्गा जलचराः पक्षिण इत्यर्थः । तेषां सम्बन्धिना अस्था अस्थिखण्डेन यत् कृतं मथनं परस्परनिघर्षः ततः उत्पन्नोऽग्निरौर्वानलवद् जलेऽपि ज्वलति निस्संशयमिति ॥ ८९ ॥

**सिहितंबचूळकळरवपुरीसहरिआळकणअतरुचुण्णं ।**
**उम्मत्तं कुणइ जणं ता जा(से? णो) मुण्डिअं सीसं ॥९०॥**

शिखिताम्रचूडकलरवपुरीषहरितालकनकतरुचूर्णम् ।
उन्मत्तं करोति जनं तावद् यावन्(नो)मुण्डितं शीर्षम् ॥

मयूरकुक्कुटपारावतानां पुरीषं तथा हरितालधुर्धूरचूर्णम् एतत् पुरुषस्य शिरसि दत्तं सदुन्मादं जनयति । मुण्डिते शीर्षेऽसौ निवर्तत इति ॥ ९० ॥

**जाहअपुरीसगब्भा सिहण्डिरुहिरेण भाविआ वत्ती ।**
**अवहरइ बिळगआण वि जळिआ जीअं भुअंगाण ॥**

जाहकपुरीषगर्भा शिखण्डिरुधिरेण भाविता वर्ती ।
अपहरति बिलगतानामपि ज्वलिता जीवं भुजङ्गानाम् ॥

जाहकः प्राणिविशेषः, तत्पुरीषेण सगर्भा पूरितान्तरा मयूररक्तेन सिक्ता या वर्ती सा ज्वलिता सती बिलस्थानगतानामपि सर्पाणां जीवम(प)हरति किमुत बहिःस्थितानामिति ॥ ९१ ॥

**घरपडळन्तरविणिहिअचक्कंकजडप्पभावविहळंगा ।**
**मुञ्चन्ति खणेण महाविसा(णि? वि)फणिणो तमावासं ॥**

गृहपटलान्तरविनिहितचक्राङ्कजटाप्रभावविह्वलाङ्गाः ।
मुञ्चन्ति क्षणेन महाविषा अपि फणिनस्तमावासम् ॥

गृहस्य पटलमाच्छादनं तदन्तरनिक्षिप्तायाः चक्राङ्कजटायाः मूलस्य प्रभावात् विसंस्थुलगात्राः सन्तः सर्पाः तद्गृहं तत्कालमेव परिहरन्तीति ॥ ९२ ॥

**तेल्लोल्लपल्लमीसिअधोहिअरुद्धं ममामकुम्मासं ।**
**रूविअदलेसु दिज्जइ वसाण कअगरुअदोसाणं ॥९३॥**

**ते तं खाऊण चिरं सुवन्ति मअपसिढिलेहि अङ्गेहि ।**
**कहकहवि लद्धसण्णा पुणो ण ढक्कन्ति तम्मि कए ॥**

तैलार्द्रपल्लमिश्रितसुधाक्षीरं समापकुल्मापम् ।
रूपिकादलेषु दीयते वृषाणां कृतगुरुकदोषाणाम् ॥

ते तत् खादित्वा चिरं स्वपन्ति मदप्रशिथिलैरङ्गैः ।
कथंकथमपि लब्धसंज्ञा पुनर्न ढौकन्ते तत्र गृहे ॥

तैलेन सिक्तं यत् तैलचूर्णेन मिश्रं सुधाक्षीरं तत् मापक्कैः कुल्मापैः रक्त-पूपकैः सहितं वृषाणां मूषिकाणाम् अर्कपत्रेषु दीयते। कीदृशानाम्। कृतगुरुदोषाणाम्। ततश्च किं भवतीत्याह — ते वृषाः तत् सुधाक्षीरं तथाविधं भुक्त्वा चिरं स्वपन्ति मोहमनुभवन्तीति। कीदृशी मूर्छा। निःसहगात्रा। अनन्तरं कथमपि प्राप्तप्रबोधाः तद् गृहमत्यन्तं परिहरन्तीति। युगलकम् ॥९३,९४॥

**पसुपइजलोल्लहरिआलपलल्लमज्जरपुरीसकअलेवो ।**
**उन्दुरुणिउरुंबं हरइ मूसिए गेहवित्थारे ॥ ९५ ॥**

पशुपतिजलार्द्रहरितालपललमार्जारपुरीषकृतलेपः ।
उन्दुरुनिकुरुम्बं हरति मूषिकाङ्कविस्तारे(?) ॥

छागमूत्रपङ्कीकृतैः हरितालतिलचूर्णवृषदंशमलैः कृतो लेपो मूषिकासमूहमेव गृहाभोगगतं नाशयति ॥ ९५ ॥

**णासन्ति तुरिअतुरिअं जीअं घेत्तूण मक्कुणा झत्ति ।**
**आलोलऊण सअणे बद्धं थलकुम्भिआमूलं ॥ ९६ ॥**

नश्यन्ति त्वरितत्वरितं जीवं गृहीत्वा मक्कुणा झटिति ।
आलोक्य शयनबद्धं स्थलकुम्भिकामूलम् ॥

स्थलकुम्भिका ओषधिविशेषः। अस्या मूलं शयने बद्धं स्पृष्ट्वा न केवलं तत्र न ढौकन्ते, यावज्जीवितरक्षार्थं पलायन्ते। त्वरितत्वरितमिति नाशक्रियाविशेषणम्। झटितीत्यालोकनक्रियाविशेषणमिति ॥ ९६ ॥

***कक्कडअवसापूरिअकुलीरक्प्परअविरइओ सहसा ।**
**आकरिसेइ पईवो पज्जालिओ मक्कुणसमूहं ॥ ९७ ॥**

कर्कटकः कुलीरो मत्स्यविशेषस्य पर्यायः । तत्र कर्कटकस्य सम्बन्धिन्या वसया पूरितो योऽसौ कुलीरस्यास्थिखण्डः तत्र विरचितः समुज्ज्वलितो दीपो मत्कुणसमूहमाकर्षति स्वसन्निकर्षमाकर्षयतीति ॥ ९७ ॥

**रइतूळरइअजावअसरिसपतेळओल्लवत्तिआगब्भो ।**
**हरइ पईवो गेहम्मि मक्कुणे जामिणीगळिओ ॥ ९८ ॥**

**रवितूलरचितयावकसर्षपतैलार्द्रवर्तिकागर्भः ।**
**हरति प्रदीपो गेहे मत्कुणान् यामिनीज्वलितः ॥ ९८ ॥**

रवितूलः अर्कवृक्षफलान्तर्वर्ति कार्पासरूपं द्रव्यं तेन रचिता तथा लाक्षारसतैलसर्षपतैलाभ्यामार्द्रा वर्तिर्गर्भेऽन्तरे यस्य तादृशः प्रदीपो गृहे रात्रौ ज्वलितः सन् मत्कुणं हरति निर्वासयतीति ॥ ९८ ॥

**धवळापराइआमूळककुभकुसुमफलपुरविळंगेहिं ।**
**सिसिवाळअभल्लाअअळक्खासज्जरससञ्जुत्तेहिं ॥**
**धूवो भवणब्भन्तरपसरतोद्दाममासळामोओ ।**
**णासेइ भुअंगोन्दुरुघुणमक्कुणमसअजूआओ ॥ १०० ॥**

**धवलापराजितामूलककुभकुसुमफलपुरविहङ्गैः ।**
**श्रीवासकभल्लातकलाक्षासर्जरससंयुक्तैः ॥**
**धूपो भवनाभ्यन्तरप्रसरदुद्दाममांसलामोदः ।**
**नाशयति भुजगोन्दुरुघुणमत्कुणमशकयूकान् ॥**

धवलापराजिता श्वेतगिरिकर्णिका तस्या मूलं ककुभस्यार्जुनस्य पुष्पफलानि तथा धूपो गुग्गुलः विहङ्गं कृमिघ्नम् एतैः तथा श्रीवासकेन तथा भल्लातकेन तथा लाक्षया तथा सर्जरसेन च कृतो धूपो गृहान्तःप्रसर्पदुत्कटघटगन्धः स्पर्शादहिमूषककाष्ठकृमिमत्कुणमशकयूकान् नाशयतीति । युगलकम् ॥ ९९,१०० ॥

---

* अस्य छाया मातृकायां नोपलभ्यते ।

**तिहळाभळ्ळाअअककुभकुसुमसाळजउविहंगेहि ।**
**रणमीसिएहि धूवो मक्कुणमसआण विद्दवणो ॥ १०१ ॥**

त्रिफलाभल्लातककुकुभकुसुमसालजतुविहङ्गैः ।
रणमिश्रितैर्धूपो मत्कुणमशकानां विद्रावणः ॥ १०१ ॥

सालः सर्जरसः जतु लाक्षा । रणम् उशीरम् । शिष्टं गतार्थम् ॥१०१॥

**इअ गळिअदप्पपसरा रिउणो एएहि विविहजोएहि ।**
**कीरन्ति णिअजणो विहु रक्खिज्जइ परपउत्ताण ॥ १०२ ।**

इति गळितदर्पप्रसरा रिपव एतैर्विविधयोगैः ।
क्रियन्ते निजजनोऽपि खलु रक्ष्यते परप्रयुक्तेभ्यः ॥

स्पष्टार्थो गाथा ॥ १०२ ॥

***एसो एत्थ समप्पसइ कअन्तदूओव्व दारुणसरूवो ।**
**हरमेहळाए बिइवो रिउजणदमणो परिच्छेओ ॥ १०३ ॥**

इति हरमेखलायां द्वितीयः परिच्छेदः ॥

---

अथ तृतीयः परिच्छेदः ।

**वेसाण कए धुत्ता करेइ खुट्टीइ विविहभंगेहि ।**
**जइ ताच्चिअ ण वसे ता किं खुट्टीहि खविएहि ॥ १ ॥**

वेश्यानां कृते धूर्ताः क्षपयन्ति कुट्टनीर्विविधभङ्गिभिः ।
यदि ता एव न वशे तत् किं कुट्टनीभिः क्षपयिताभिः ॥

पूर्वपरिच्छेदोक्तस्य कुट्टनीक्षपणस्य यद्यपि वेश्यावशीकरणोपा(य)तयोपन्यासः कृतः, तथापि वेश्यानामेव वशीकरणं मुख्यमिति तत्प्रयोजनं तृतीयपरिच्छेदोपन्यासस्य प्रतिपादयितुमेव । गाथा स्पष्टार्था ॥ १ ॥

**अह दुव्विअड्ढवेसासोहग्गविहडणसमत्थं ।**
**अविहेअवसीअरणं भणिमो तइअं परिच्छेअं ॥ २ ॥**

अथ दुर्विदग्धवेश्यासौभाग्यविघटनसमर्थम् ।
अविधेयवशीकरणं भणामस्तृतीयं परिच्छेदम् ॥

प्रस्तुतपरिच्छेदप्रशंसाप्रयोजनप्रतिपादनार्थं स्पष्टार्थेयं गाथा ॥ २ ॥

---

* अस्य छायाविवरणं वा न दृश्यते ।

**उ(म्म)त्तसुणहदाहिणदिट्ठीफळअम्मि लिक्खए जीए ।**
**णाम अक्कंगारेण एइ सा कामिणी तुरिअं ॥ ३ ॥**

**उन्मत्तश्वदक्षिणदिगस्थिफलके लिख्यते (तया ? यस्याः) ।**
**नामार्काङ्गारेण एति सा कामिनी त्वरितम् ॥**

उन्मतश्वा अलर्क इति प्रसिद्धः । तस्य कायदक्षिणभागास्थिपट्टके अर्काङ्गारेण येन तेन कज्जलेन अमुकं वशमानयत्विति नाम लिख्यते, सा वशीकर्तुमिष्टा स्त्री क्षिप्रमागच्छतीति ॥ ३ ॥

**अह कहवि णएए वसं पुव्वभणिए विहिम्मि णीसेसं ।**
**तत्ताविअम्मि मन्दाणळेण णामे धुवं एइ ॥ ४ ॥**

**अथ कथमपि नैति वशं पूर्वभणिते विधौ निश्शेषे ।**
**तत्तापिते मन्दानलेन नाम्नि ध्रुवमेति ॥**

मन्दानलः कुकूलाग्निः । पूर्वगाथार्थविशेषणार्थैषा गाथा स्पष्टार्थेति ॥४॥

**अदसणसिसुळाळारोअणाहि पूसम्मि विरइओ विहिणा ।**
**भंगरअमूळसहिओ कुणइ वसे तिभुअणं तिळओ ॥ ५ ॥**

**अदशनशिशुलालारोचनाभ्यां तिष्ये विरचितो विधिना ।**
**भृङ्गरजोमूलसहितः करोति वशे त्रिभुवनं तिलकः ॥**

अजातदन्तबा(लला)लारोचनाभ्यां मार्कवमूलेन सह पुष्यर्क्षे पिष्टाभ्या कृतो विशेषकः उक्तं कार्यं करोति । विधिरत्र कुमारी द्रव्यं पिनष्टीति ॥५॥

**गोरोअणासिळारुणदळरइअविसेसओ विळित्तो व्व ।**
**णरणारिणरिन्दपिओ होइ असज्झो विसाणं च ॥ ६ ॥**

**गोरोचनाशिलारुणदलरचितविशेषको विलिप्तो वा ।**
**नरनारीनरेन्द्रप्रियो भवत्यसाध्यो विषाणां च ॥**

गोरोचना प्रसिद्धा । शिला मनश्शिला । अरुणं कुङ्कुमम् । दलं तमालपत्रम् । गन्धं पत्रमिति प्रसिद्धम् । कृत(स्ति ? ति)लकः समालब्धाङ्गो वा पुंसां स्त्रीणां राज्ञां च वल्लभो भवति । विषाणां च स्थावरादीनामनाक्रमणीयो भवति ॥ ६ ॥

**भङ्गरअदेविधवळापराइआसिअवआहि णिम्मविओ ।**
**गोरोअणासणाहो तिळओ भुवणं वसे कुणइ ॥ ७ ॥**

भृङ्गरजोदेविधवलापराजिताश्वेतवचाभिर्निर्मितः ।
गोरोचनासनाथस्तिलको भुवनं वशीकरोति ॥

मार्कवसहदेवाश्वेतगिरिकर्णिकाश्वेतवचागोरोचनाभिः कृतस्तिलकः उक्तमेतत्कार्यं करोतीति ॥ ७ ॥

**कुणइ वसे वत्ती (पी?मी)णपित्तगोरोअणाविणिम्मविआ ।**
**सव्वकरकणिट्ठविरइएण तिळएण तेळ्ळोक्कं ॥ ८ ॥**

करोति वशे वर्त्ती (पी? मी)नपित्तगोरोचनाविनिर्मिता ।
सव्यकरकनिष्ठाविरचितेन तिलकेन त्रैलोक्यम् ॥

मत्स्यपित्तगोरोचनकृता या वर्ती सा निघृष्टवामहस्तकनिष्ठाङ्गुल्या विरचिततिलकोक्तं कार्यं करोति ॥ ८ ॥

***गोरंभापित्तुब्भवसिहिमूळामोहणीसिळारइओ ।**
**तेळ्ळोक्कं वसिअकरिणो मुहम्मि णिव्वट्टिओ तिळओ ॥**

गोरम्भापित्तोद्भवगोरोचना तथा समयूरशिखा तथा मोहनी विटपत्रिका शिला मनःशिला एताभिर्विरचितस्तिलको यथोक्तं कार्यं करोतीति ॥ ९ ॥

**विह्णुक्कन्ताभंगरअदेविधवळापराइअजटाहि ।**
**पूसम्मि रोअणापाणिएण कुमारिपिट्ठाहि ॥ १० ॥**
**काऊण तिळअमिमिणा मअरद्धआगेद्धबन्धसमेण ।**
**कुणह वसे जीअळोअं दंसणपरिवड्ढिआणन्दं ॥ ११ ॥**

विष्णुक्रान्ताभृङ्गरजोदेविधवलापराजितजटाभिः ।
पुष्ये गोरोचनापानीयेन कुमार्या पिष्टाभिः ॥
कृत्वा तिलकममुना मकरध्वजस्निग्धबान्धवसमेन ।
कुरुत वशे जीवलोकं दर्शनपरिवर्धितानन्दम् ॥

विष्णुक्रान्ता भीलुपुष्पा तथा मार्कवेन सहदेव्या श्वेतगिरिकर्णिकामूलेन चैत्यनेन द्रव्येण गोरोचनाजलाराञ्जितेन कन्यकापिष्टेन तिलकं कृत्वा कार्यं सम्पादयन्तीति युगलकम् ॥ १०, ११ ॥

---

* अस्य छाय मातृकायां नोपलभ्यते ।

**बहुसोरंअरिसोणिअभाविआए गोरोअणाए कअतिळ-[आ ।**
**जं जं पेच्छइ पुरुसं तं तं महिळा वसे कुणइ ॥ १२ ॥**

बहुशरीर्यंत्तशोणित(भावित)या गोरोचनया कृततिलका ।
यं यं प्रेक्षते पुरुषं तं तं महेला वशीकुरुते ॥

तन्तुरजसबहुवारामिश्रितया गोरोचनया रचितविशेषका वधूः (यं) यमिच्छति तं तं दृष्टमात्रं वशीकुरुत इति ॥ १२ ॥

**रत्तहअमारकुसुमं सिद्धत्थअकुट्ठगअमउम्मीसं ।**
**हरवळ्ळहोट्टवारुणसिअमक्कवमूळसञ्जुत्तं ॥ १३ ॥**

**भूअदिणे पूसे वा सीअळसळिळेण वड्ढिअं विहिणा ।**
**सइ गुरुभआरम्भे तिळअमेअं(क)रज्जासु ॥ १४ ॥**

रक्तहयमारसिद्धार्थककुष्ठगजमदोन्मिश्रम् ।
हरवल्लभोष्ट्रवारुणसितमार्कवमूलसंयुक्तम् ॥

भूतदिने पुष्ये वा शीतलसलिलेन वर्धितं विधिना ।
सदा सर्वभयारम्भेषु तिलकमेतं कुर्यात् ॥

लोहितकरवीरकुसुमं सर्षपावाप्यकरिदानमिश्रितधुर्धूरकारतवारुणीसितमार्कवसंयुक्तं शीताम्बुना पिष्टं तिष्ये चतुर्दश्यां वा नित्यं सर्वभयनिवृत्त्यै तिलकमेतं कुर्यादिति युगलकम् ॥ १३, १४ ॥

**एअं चिअ पाणे भोअणे व्व पूसम्मि पञ्चमळमिसिअं ।**
**दिण्णं भुवणम्मि वसे कुणइ सआ दासपडिरूवं ॥ १५ ॥**

एतदेव पाने भोजने वा पुष्ये पञ्च(म)लयुक्तम् ।
दत्तं भुवनमपि वशीकरोति सदा दासप्रतिरूपम् ॥

एतदेव पूर्वोक्तं द्रव्यं देहजैः पञ्चभिस्तत्र मुखवारिजैश्चतुर्भिस्त्वङ्मलेन त(दा ? था) पञ्चमेन मिश्रितं पाने भोजने वा दत्तं सदुक्तं कार्यं करोतीति ॥ १५ ॥

**सिअसरिसवमसिअभुजंगमच्छए गजमएण सञ्जुत्तं ।**
**पुटदड्ढं चुण्णइअमञ्जणाभिणमो वसीअरणं ॥ १६ ॥**

सितसर्षपमसितभुजङ्गमस्तके गजमदेन संयुक्तम् ।
पुटदग्धं चूर्णीकृतमञ्जनमिदं वशीकरणम् ॥

गौरसर्षपाख्यं द्रव्यं कृष्णसर्पमस्तकाभ्यन्तरे न्यस्तं करिमदामिश्रितं पुटपाकदग्धं सत् पिण्डमित्येवं कृतमिदमञ्जनं वशीकरणमिति । आममृन्मयपात्रद्वयस्याभ्यन्तरे द्रव्यं तस्य सन्धिस्थाने च लेपने च निर्विवरं कृत्वा पादद्वयपाकपर्यन्तं पच्यते पुटपाकदग्धमित्युच्यत इति ॥ १६ ॥

होइ सिळाणाएसरपिअंगुरोअण(ञ्जिआ)च्छीणं ।
णिस्सेसतरुणिजणवळ्ळभत्तणं सामिसम्माणं ॥ १७ ॥

भवति शिलानागकेसरप्रियङ्गुगोरोचनाञ्जिता(क्षी ? क्षा)णाम् ।
निश्शेषतरुणीजनवल्लभत्वं स्वामिसम्मानम् ॥

मनश्शिलानागकेसरश्यामगोरोचनाभिः कृताञ्जनेनाञ्जितनेत्राणां पुंसामुक्तं फलं भवतीति ॥ १७ ॥

समतुळिअञ्जनचंदनपङ्कअदळरोअणापिअंगूहिं ।
अञ्जिअणअणो जं जं पेच्छइ तं तं वसे कुणइ ॥ १८ ॥

समतुलिताञ्जनचन्दनपङ्कजदलरोचनाप्रियङ्गूभिः ।
आञ्जितनयनो यं यं द्रक्ष्यति तं तं वशीकुरुते ॥

समतुलिताभिस्तुल्यभागाभिः सौवीराञ्जनचन्दनपद्मतमालपत्रगोरोचनाभिः कृतेनाञ्जनेनाञ्जितनेत्रो दर्शनमात्रेण परं वशीकुरुत इति ॥ १८ ॥

बहुसो वराहसोणिअभाविअजावअ(रञ्जिअ)कआए ।
सौवीरञ्जणमहुअरचुण्णसगब्भाए वत्तीए ॥ १९ ॥

कोळवसाभरिअपईवगाहिअकज्जळकअञ्जणा होंति ।
सअळजणहिअअदइआ विहडिअपडिपक्खमाहप्पा [॥ २० ॥

बहुशो वराहशोणितभावित(परिभावित ?)यावक(रञ्जित)कृतया ।
सौवीराञ्जनमधुकरचूर्णसगर्भया वर्त्या ॥

कोलवसाभरितप्रदीपगृहीतकज्जलकृताञ्जना भवन्ति ।
सकलजनहृदयदयिता विघटितप्रतिपक्षमाहात्म्याः ॥

गाथायुगलस्यायमर्थः—बहुशो बहून् (व ? वा)रान् सूकरमांसरयासृजा भावितं सत् शुष्कं यद् यावकं लाक्षारसरञ्जितं वास उपचारात्। तेन निर्मितया वर्त्या। तथा सौवीराञ्जनेन शुष्कभ्रमरचूर्णेन सगर्भया पूरितान्त(रा ? रया) सूकरस्नेहेन पूरितप्रदीपगृहीतेन कज्जलेन कृताञ्जननेत्रा उक्तफलभागिनो भवन्तीति। युगलकम्॥ १९, २०॥

***सज्जरसविसाणवआमुअंगमुडिकामिणीहि णिम्माविओ।**
**सिअसिद्धत्थसणाहो धूवो सव्वत्थसि(द्धि)अरो॥ २१॥**

सर्जकुष्ठवचानागकेसरसूक्ष्मिकाप्रियङ्गूभिः निर्मितः तथा गौरसर्षपैर्युक्तो धूपः सर्वार्थान् साधयतीति॥ २१॥

**जळवाहमळअमहीअरजोइअसममभाअ(वि ?)मीसिओ [पूसे।**
**णिअळाळासञ्जुत्तो धूवो सोहग्गसञ्जणणो॥ २२॥**

**जलवाहमलयमहीधरयोजितसमभागमिश्रितः पुष्ये।**
**निजलालासंयुक्तो धूपः सौभाग्यसञ्जननः॥**

पुष्यर्क्षे मुस्ताचन्दनशैलेयानां योजितैः समैर्भागैर्मिश्रीकृतस्तथा स्वमुखनिष्यन्दसहितो धूपः सौभाग्यं जनयतीति॥ २२॥

**कंकुतएणाएसरपउमअमाळूरकुडिळमंसीहि।**
**सव्वत्थ कुणइ सिद्धिं धूवो समभाअणिम्मविओ॥ २३॥**

**कङ्कुत्वङ्नागकेसरपद्मकमालूरकुटिलमांसीभिः।**
**सर्वत्र करोति सिद्धिं धूपः समभागनिर्मितः॥**

कङ्कु प्रियङ्गु। त्वक् भृङ्गः। नागकेसरपद्मके प्रसिद्धे। मालूरं बिल्वम्। कुटिलं तगरम्। मांसी नलदः। एतैर्द्रव्यैस्तुल्यांशैः कृतो †धूपः... ....॥ २३॥

**व्रजथ नरेन्द्रभवनं यदीच्छथ वशीकर्तुम्॥**

लघु कृष्णागरु। मलयं च(न्द)नम्। कुष्ठं विषाणम्। कुङ्कुमं काश्मीरम्। सुरदेवदारु करिनागकेसरं वन्यं परिपेलवम्। कुसुमसलिलं माक्षिकम्। एतैः कृतो धूपो यैस्तथाविधाः सन्तो राजगृहं गच्छत, यदि राजानं वशीकर्तुं कामश्चेति॥ २४॥

* अस्य छाया मातृकायां नोपलभ्यते। † अत्र कियांश्चिद् ग्रन्थो गलित इति प्रतिभाति॥

कण्णाव(रेण ? रणे) कामिणिसमागमे पण्णविक्कए तुरिअं।
एसोच्चिअ सिद्धिअरो धूवो चिन्तामणी णाम ॥ २५ ॥

कन्यावरणे कामिनीसमागमे पण्यविक्रये त्वरितम् ।
एष एव सिद्धिकरो धूपश्चिन्तामणिर्नाम ॥

अस्यैव फलान्तरप्रतिपादनार्था स्पष्टा गाथेति ॥ २५ ॥

कररुहकळळकुन्दकाळाउरुदळळक्खासणाहओ ।
दळमाळाविसाणमळउब्भवविरइअसमभाओ ॥ २६ ॥
मअणमहाणरिन्दणवणिसिअसराणिपुढमदूअओ ।
कुणइ वसम्मि सअळं भुवणं पि हु एस सअन्धधूपओ ॥

कररुहकललकुन्दकालागरुदललाक्षासनाथः ।
दलमालाविषाणमलयोद्भवविरचितसदशभागः ॥
मदनमहानरेन्द्रनवनिशितशराशनिप्रथमदूतः ।
करोति वशे (सकलं) भुवनमपि खल्वेष सगन्धो धूपः ॥

कररुहो नखम् । कललं मांसी । कुन्दं कुन्दुरुष्कः । कृष्णागरु लघु । दलं गन्धपत्राणि । लाक्षा प्रसिद्धा । एतैः सहितं दलं सलकम् । माला स्पृक्का । विषाणं कुष्ठम् । मलयोद्भवं चन्दनम् । एतैर्विरचितास्तुल्यभागा यस्य समांशैः एतैः सर्वैरित्यर्थः । सुगन्धधूपोऽयमत्यन्तसौभाग्यप्रदत्वात् स्मरशराग्रदूतकल्पः । उक्तार्थक्रियाकर इति । युगलकम् ॥ २६, २७ ॥

मळआरुणगिरिमिअंककन्दळीसमकअभाअओ ।
गअदाणसिळापिअंगुरससरिसवसञ्जुत्तओ धूवो ॥
मअरद्धओव्व विडडिअजणमाहप्पओ भुअणं ।
ससुरासुरं पि कुणइ वसे विळसन्तओ ॥ २९ ॥

मलयारुणगिरिमृगाङ्ककन्दलीकृतसमभागः ।
गजदानशिलाप्रियङ्गुरससर्षपसंयुक्तो धूपः ॥
मकरध्वज इव विघटितजनमाहात्म्यं भुवनम् ।
ससुरासुरमपि करोति वशे विलसत् (?) ॥

मलयं चन्दनम् । अरुणं कुङ्कुमम् । गिरेः शिलापुष्पम् । मृगाङ्कः कर्पूरम् । कन्दली ओषधिविशेषो देशान्तरे प्रसिद्धः । गजमदः । शिला मन-

शिला । प्रियङ्गुः कामिनी । रसो गोलः । सर्षपः सटहः । एतैः समभागैः कृतो धूपः उक्तं कार्यं करोतीति ।

"द्वादशाङ्गयुतो धूपो (ह्य)त्यन्तविबुधप्रिय. ।
(द ? दा)रकर्मणि विख्यातः सम्यग्विधिनियोजितः" ॥ २८, २९ ॥

**णिअवाहविंअसोणिअमळमीसुम्मत्तसुणहजीहाए ।**
**खाणेण व पाणेग व (पु ? कु)णइ वसे तिभुवणं सअळं ॥**

**निजबाष्पशोणितमल(य ?)मिश्रोन्मत्तश्वजि(ह्वया ? ह्वायाः) ।**
**खादनेन वा पानेन वा करोति वशे त्रिभुवनं सकलम् ॥**

बाष्पादीनि प्रसिद्धानि । तान्येव त्रीणि समानि एतैर्मिश्रिता उन्मत्त-शुनोऽलर्कस्य जि(ह्वया ? ह्वा) खादनपानदत्ता उक्तं कार्यं करोतीति । एतानि द्रव्याणि साधको यस्मै प्रयुङ्क्ते तं तं वशीकरोतीत्यर्थः ॥ ३० ॥

**रइसमए णिअबीअं घेत्तूण करेण कामिणीचरणं ।**
**जो (वा ? आ) लिंपइ वामं सो तीए चिरं वळहो होइ ॥**

**रतिसमये निजबीजं गृहीत्वा करेण कामिनीचरणम् ।**
**य आलिम्पति वामं स तस्याश्चिरं वल्लभो भवति ॥**

सम्प्राप्तयोगे भावप्राप्त्यवसरे स्ववीर्यं वामकरेण गृहीत्वा कामिन्या वामं चरणं लिम्पति स तां वशीकरोतीति ॥ ३१ ॥

**माअंगणिहअणरणअणणासिआहिअअलिंगजीहाहि ।**
**पक्कं पिणाइभवणे तेळळं पूसम्मि रअणीए ॥ ३२ ॥**

**मअणंकुस त्तिणामेण सिद्धमिणमो महावसीअरणं ।**
**फस्सेण वि किं बहुणा कुणइ बसं वणगइ(न्दो ? न्दं)पि ॥**

**एअं पुरा सुरमणिमउडमऊहच्छुरिअचळणेण ।**
**सिद्धं पसुवइणा पव्वईए तेळळं पसण्णेण ॥ ३४ ॥**

**खाणेण व पाणे(ण) व दिण्णं पूसम्मि कामिणिजणस्स ।**
**पञ्चङ्गमळसणाहं कत्तो अण्णं वसीअरणं ॥ ३५ ॥**

**एअं गुरुआराहणपविअसिअळोअणारविन्देण ।**
**कहिअं दणइन्दपुरोहिएण सुरमन्तितणअस्स ॥ ३६ ॥**

मातङ्गनिहतनरनयननासिकाहृदयलिङ्गजिह्वाभिः ।
पक्वं पिनाकिभवने तैलं पुष्ये रजन्याम् ॥

[illegible] ति नाम्ना सिद्धमिदं महावशीकरणम् ।
स्प[illegible] बहुना करो(ति) वशं वनगजेन्द्रानपि ॥

एतद् पुरा सुरमकुटमणिमयूखच्छुरितचरणेन ।
सृष्टं पशुपतिना पार्वत्यास्तैलं प्रसन्नेन ॥

खादनेन वा पानेन वा दत्तं पुष्ये कामिनीजनस्य ।
पञ्चाङ्गमलसनाथं कुतोऽन्यद् वशीकरणम् ॥

एतद् गुर्वाराधनप्रविकसितलोचनारविन्देन ।
कथितं दानवेन्द्रपुरोहितेन सुरमन्त्रितनयस्य ॥

गाथापञ्चकेन कुलकस्येदं तात्पर्यं — गजेन व्यापादितस्य पुंसो नेत्र-घ्राणहृदयपद्मध्वजलालाभिस्तैलं पुष्यर्क्षे रात्रौ रुद्रालये पक्वं शुद्धास्वस्थित्या (?) उक्तं कार्यं करोतीति । एतदेव पञ्चभिः कुलकम् ॥ ३२—३६ ॥

**णिअवीअसुभाविअकइवराङ्गचुण्णेण कसाळिअदळाइं ।**
**दिण्णाइ कुणन्ति वसे अग्घाउं सुरहिकुसुमाइं ॥ ३७ ॥**

निजबीजसुभावितकपिवराङ्गचूर्णेन लिप्तदलानि ।
दत्तानि कुर्वन्ति वश आघ्रातुं सुरभिकुसुमानि ॥

निजबीजसंयुक्तेन प्लवङ्गध्वजचूर्णेन अवकुतपत्राणि सुगन्धिकुसुमान्यामोदग्रहणाय यस्मै दीयन्ते तं वशीकुर्वन्तीति ॥ ३७ ॥

**पुत्तञ्जारिव्व कअञ्जाळिव्व मोहव्व बर्हिचूळोव्व ।**
**कुणइ वसे गोरम्भव्व पञ्चमळमीसिआ दिण्णा ॥ ३८ ॥**

पुत्रञ्जारी वा कृताञ्जलिर्वा( मोहा वा) बर्हिचूडा वा ।
करोति वशे गोरम्भा वा पञ्चमलमिश्रिता दत्ता ॥

पुत्रञ्जारी स्थितिभिः कृताञ्जलिर्नतिकृत् मोहा मोहनी बर्हिचूडा मयूर-शिखा। गोरम्भानि सुमनस्य(?)चूर्णमिश्रनवनीतमतिशयप्रसिद्धम् अविधेयवशी-करणं चरणतलाभ्यङ्गयुक्त्या । गोरम्भा ओषधिविशेषः । तदीयसूक्ष्मचूर्णभावितं नवनीतं वशीकार्यस्य पादतललेपात् सुप्रसिद्धं वशीकरणमिति ॥ ३८ ॥

**णरकाळसारहयमत्तकुञ्जरा होन्ति दासपडिरूवा ।**
**चण्डाळिआइ कमसो वड्ढन्तएक्कक्कपत्ताइ ॥ ३९ ॥**

नरकालसारहयमत्तकुञ्जरा भवन्ति दासप्रतिरूपाः ।
चण्डालिकया क्रमशो वर्धमानैकैकपत्रया ॥

चण्डालिका रक्तकञ्चुकाख्या ओषधिः तया नरस्य कृष्णसारस्य मृगस्य तुरगस्य मत्तवारणस्य एकैकपत्रवृद्ध्या दत्तया ते नरादयो दासप्रतिरूपा भवन्ति ॥ ३९ ॥

**गन्धअसिळाविळेविअसोसिअचुण्णीकअं महुम्मीसं ।**
**ळेवेण (वसे महिळां) कुणइ रए कुळिसतरुखण्डं ॥ ४० ॥**

गन्धकशिलाविलेपितशोषितचूर्णीकृतं मधून्मिश्रम् ।
लेपेन वशे महेलां करोति (रते) कुलिशतरुखण्डम् ॥

कुलिशः सुधावृक्षः तस्य खण्डः एकदेशः गन्धपाषाणमनश्शिलाखण्डाभ्यां शोषितस्ततश्चूर्णीकृतः पश्चात् क्षौद्रभावितो रतिसमये ध्वजलेपाद् योषितं वशीकरोतीति ॥ ४० ॥

**दिच्छिन्दिअमहुकप्पूरळित्तळिंगा रम[illegible] [illegible]सुरए ।**
**हिअए महिळाण णरा वसन्ति ते दि[illegible] काळं ॥ ४१ ॥**

**एस किळ जोअराओ दिण्णो रुद्देण मूळएवस्स ।**
**भद्दस्स देवअत्ता(ए ?) वसम्मि सम सट्ठिआणेण ॥ ४२ ॥**

दक्षे(न्द्र ? न्द्रिय)मधुकर्पूरलिप्तलिङ्गा रमन्ते ये सुरते ।
हृदये महेलानां नरा वसन्ति ते दीर्घं कालम् ॥

एष किल योगराजो दत्तो रुद्रेण मूलदेवाय ।
भद्राय देवदत्ता(य ?) वशेऽस्य संस्थितानेन ॥

दक्षः प्राणिविशेषो भाळूक इति प्रसिद्धः । तदीयेनेन्द्रियेण पिष्टेन तथा माक्षिकघनसाराभ्यां लिप्तसाधना ये रमन्ते निधुवने क्रीडन्ति ते कामिनीनां चिरं कालं हृदये वसन्ति । सदा भवन्तीत्यर्थः । अस्यैवानुशंसार्था स्पष्टा द्वितीया गाथा । भद्रशब्दो मूलदेवविशेषणमिति । युगलकम् ॥ ४१,४२ ॥

**मुणिकुसुमसलिलघअ(मह्र)जालिणिफलरेणुपारअहिमेहि।**
**कीरइ विअद्धदइओ कअअफलुम्मीसिओ लेओ ॥४३॥**

मुनिकुसुमसलिलघृतमधुजालिनीफलरेणुपारतहिमैः ।
क्रियतां विदग्धदयितः कतकफलोन्मिश्रितो लेपः ॥

मुनिरगस्त्यतरुः तत्कुसुमजलेन तद्रसेनेत्यर्थः । तथा घृतमाक्षिकाभ्यां तथा जालिन्या देवताल्याः सम्बन्धिना फलचूर्णेन तथा सूतेन चन्दने द्वत्ते. कतकफलचूर्णमिश्रैर्नागरप्रियो ध्वजलेपः कामिनीवशीकारहेतुः क्रियतामिति ॥ ४३ ॥

**जस्स मणे कज्जं सामलिए दासत्तणं पवण्णाए ।**
**सो कुणइ लिंगलेवं कलरवमलसिन्धवमहूहि ॥ ४४ ॥**

यस्य मनसि कार्यं श्यामलया दासत्वं प्रपन्नया ।
स करोतु लिङ्गलेपं कलरवमलसैन्धवमधुभिः ॥

कलरवमलं पारावतशकृत् । सैन्धवमधुनी प्रसिद्धे । शिष्टं गतार्थमिति ॥ ४४ ॥

**ससिसूआरुणकइलिंगकणअमहुलित्तलिंगरमिआओ ।**
**कुणइ वसे लडहविलासिणीओ विरहे ण जीअन्ति**
**[॥ ४५ ॥**

शशिसूतारुणकपिलिङ्गकनकमधुलिप्तलिङ्गरमिताः ।
करोति (वशे) लटहविलासिनीर्विरहे न जीवन्ति ॥

पारतकर्पूरकुङ्कुमवानरध्वजमातुलक्षौद्राभ्यक्तेन लिङ्गेन कामिता सुभगकामिनीः पुरुषो वशीकरोति । एवं नाम (काश्यपा? ता वश्या) भवन्ति, यत् तद्विप्रयोगे न जीवन्तीति ॥ ४५ ॥

**ससिरसलअणिमअगअणपिप्पलिसिन्धुतुंबु(रु)महूहिं।**
**लेविअधआण महिला होन्ति रए णिज्झरसरिच्छा**
**[॥ ४६ ॥**

शशिरसलवनामदगगनपिप्पलिसिन्धुतुम्बुरुमधुभिः ।
लेपितध्वजानां महेला भवन्ति रते निर्झरसदृक्षाः ॥

कर्पूरपारताभ्यां तथा लयनिमदेन (?) लताकस्तूरिकया तथा गगनेनाभ्रकेण तथा मागधिकया तथा सैन्धवेन तथा तुम्बुरुफलैः प्रसिद्धैस्तथा माक्षिकेण

एतैरभ्यक्तलिङ्गानां निधुवनसमये वनिता बहुमदस्यन्दिन्यो भवन्ति । ततश्च वश्यत्वमापद्यन्त इत्यर्थः स्थित एवेति ॥ ४६ ॥

**हरिआलञ्जणपारअमागहिआकुट्ठसेन्धवमहूहि ।**
**कळरवपुरीसमीसो लिं(ग? गे)लेवो कओ विहिणा ॥ ४७ ॥**
**सोहग्गमअपरवसतरुणिअणहिअअमत्तमाअंगो ।**
**सुरए रभसेण वसे करेइ मअणंकुसो णाम ॥ ४८ ॥**

हरितालाञ्जनपारतमागधिकाकुष्ठसैन्धवमधुभिः ।
कलरवपुरीषमिश्रैर्लिङ्गलेपः कृतो विधिना ॥
सौभाग्यमदपरवशतरुणीजनहृदयमत्तमातङ्गम् ।
सुरते रभसेन वशे करोति मदनाङ्कुशो नाम ॥

हरितालसौवीराञ्जनहरवीर्यपिप्पलीविषाणलवणमाक्षिकैः पारावतमलसंयुक्तैः विधिना मदसमांशरूपेण विधानेन कृतो ध्वजाभ्यङ्गो सुरते रभसेन साभिलाषत्वेनोक्तविशेषणविशिष्टास्तास्तरुणीर्वशीकरोतीति युगलकम् ॥ ४७,४८ ॥

**जाइ (व) काइ व घेत्तूण पञ्च कुसुमाइ रत्तवण्णाइ ।**
**समतलिअपिअंगुमीसिआइ अइमसिणपिट्ठाइ ॥ ४९ ॥**
**एएण लित्तलिंगो जं जं कामेइ कामिणिं कुसलो ।**
**सोभग्गरूवगुणगव्विअं तरुणिं वसे कुणइ ॥ ५० ॥**

यानि वा कानि वा गृहीत्वा पञ्च कुसुमानि रक्तवर्णानि ।
समतुलितप्रियङ्गुमिश्रितान्यतिमसृणपिष्टानि ॥
एतेन लिप्तलिङ्गो यां यां कामयते कामिनीं कुशलः ।
सौभाग्यरूपगुणगर्वितां (तरुणीं) वशीकुरुते ॥

यानि वा कानिचित् प्रभि(न्न)जातिपुष्पमिति पञ्च लोकहितानि पुष्पाणि गृहीत्वा तत्तुल्यपरिमाणगन्धप्रियङ्गुमिश्रितानि कृत्वा एतेन द्रव्येण कृतध्वजाभ्यङ्गो यां यां योषितं रमयति सा सा सुभगत्ववपुःप्रकर्षगर्वितापि तस्य वश्यत्वमापद्यत इति युगलकम् ॥ ४९,५० ॥

**घअघट्ठ(रत्त)कइलिंग(लित्त)लिंगाण ळडह(वणिदाओ)।**
**होइ वसे मअरद्धअसर(सोअर)सळळविहुराओ ॥ ५१ ॥**

**एअस्स मूळसिरिणा मअरद्धअसरसहोअ(र)समस्स ।**
**ळेवस्स पट्टबन्धो कओ महाआळभुवणम्मि ॥ ५२ ॥**

घृत(भृ? पि)ष्ट(रक्त)कपिलिङ्गलिप्तलिङ्गानां लटहवनिताः ।
भवन्ति वशे मकरध्वजशरसोदरशल्यविधुराः ॥
एतस्य श्रीमूलदेवेन मकरध्वजशरसहोदरसमस्य ।
लेपस्य पट्टबन्धः कृतो महाकालभुवने ॥

घृतपिष्टेन रक्तस्य कर्पमर्कटस्य मेढ्रेण लिप्तसाधनानां सुन्दरस्त्रियः स्मरशरनिकरशल्यव्यथिताः सद्यो वशीभवन्ति । अस्यैवानुशंसार्था स्पष्टार्था गाथा । मकरध्वजशराणां सहोदरतुल्यस्य समानार्थकारित्वाद् भ्रातृतुल्यस्य योग(स्य) पट्टबन्धः कृत इति युगलकम् ॥ ५१, ५२ ॥

**जाळिणिफळरेणुरसिन्दकणअळोअणखण्डसहिएहि ।**
**सुरअम्मि ओट्ठवारुणिदुद्धेण करंभिओ ळेवो ॥ ५३ ॥**
**एसो विअ गुरुजोव्वणसोभग्गोत्ताणकामि(णि)जणस्स ।**
**हरइ मअरद्दं मअरद्धओ व्व भुवणे विअंभन्तो ॥ ५४ ॥**

जालिनिफलरेणुरसेन्द्रकनकलवणाम्लवेतस(स?)हितैः ।
सुरते उष्ट्रवारुणिदुग्धे मिश्रीकृतो लेपः ॥
एषोऽपि गुरुयौवनसौभाग्योत्तानकामिनीजनस्य ।
हरति गर्वं मकरध्वज इव भुवने विजृम्भमाणः ॥

देवतालीफलचूर्णेन पारतेन च हरदयितेन सैन्धवेन अम्लवेतसेन चन्दनेन च एतैः करभवारुण्याः क्षीरेण च आलोलितो लेप एषोऽपि सुरतसमये प्रयोगः प्रकृष्ट (वारुण्या? तारुण्य) सौन्द(र्या? र्यो)न्नतस्य विलासिनीलोकस्य साक्षात् कन्दर्प इव दर्पं (जनयति विजयमानो?) हरतीति युगलकम् ॥ ५३, ५४ ॥

**हअळाळासिअसरिसवमञ्जिट्ठाजाइकुसुमदळमीसं ।**
**जो कुणइ ळिङ्गळेवं सोच्चिअ कुसुमाउहो होइ ॥ ५५ ॥**

हयलालासितसर्षपमञ्जिष्ठाजातिकुसुमदलमिश्रम् ।
यः करोति लिङ्गलेपं स एव कुसुमायुधो भवति ॥

तुरगमुखनिःष्यन्दो गौरसर्षपः मञ्जिष्ठा जातिकुसुमं सुमनःपुष्पाणि तमालपल्लवानि एतानि मिश्रयित्वा कृतो ध्वजलेपः प्रयोक्तुः साक्षात् कुसुमायुधत्वमापादयतीति ॥ ५५ ॥

**हरबीअघुसिणघणसाररोअणामळअहेमरअरइओ ।**
**सुरअम्मि हरइ हिअअं ळेवो सुरसुन्दरीणं पि ॥ ५६ ॥**

हरबीजकुङ्कुमघनसाररोचनामलयहेमरजोरचितः ।
सुरते हरति हृदयं लेपः सुरसुन्दरीणामपि ॥

पारतः काश्मीरकर्पूरगोरोचनाचन्दनमातुलचूर्णैर्निर्मितः साधनलेपोऽप्सरसामपि चित्तं हरतीति ॥ ५६ ॥

**तइतअरकळ्ळकेसरकुसुम्भसेळेअविरइअं कुणइ ।**
**सोभग्गमणण्णसमं वामाण विळेवणं सुहअं ॥ ५७ ॥**

त्वक्तगरतकल्लकेसरकुसुम्भशैलेयविरचितं करोति ।
सौभाग्यमनन्यसमं वामानां विलेपनं सुखदम् ॥

वल्कलकुटिलमांसीनागरकेसरमहारजनीपरपुष्टैर्विरचितः वधूनां वराङ्गलेपः परमं सौभाग्यं करोति सुखदत्वादिति ॥ ५७ ॥

**सिन्धुवआसोवचळसोवीर(अ)मच्छपित्तवरणीहि ।**
**घअमहुक(ळ ? णा)सणाहो भअळेओ कुणइ सोभग्गं ॥**

सैन्धववचासौवर्चलसौवीरकमत्स्यपित्तवरणीभिः ।
घृतमधु(कृतोऽसौ ? कणासनाथौ) भगलेपः करोति सौभाग्यम् ॥

लवणोग्रगन्धाकृतकशैलाञ्जनमत्स्यापित्तैस्तथा वरण्या सौराष्ट्रमृत्तिकया चेत्येतैः कृतः सर्पिर्माक्षिकपिप्पलीचूर्णयुतः स्त्रीणां वराङ्गाभ्य(क्तः ? ङ्गः) सौभाग्यमावहतीति ॥ ५८ ॥

**(सिअ)सिद्धत्थअतेळ्ळं दाळिमपञ्चङ्गसाहिअं विहिणा ।**
**गुज्झब्भङ्गेण रए कुणइ वसे णिअपइं महिळा ॥ ५९ ॥**

सितसिद्धार्थकतैलं डाडिमपञ्चाङ्गसाधितं विधिना ।
गुह्याभ्यङ्गेन रते करोति वशे निजपतिं महेला ॥

गौरसर्षपतैलं डाडिमस्य पञ्चभिरंशैर्दलादिभिर्विधानेन साधितं पक्वं वराङ्गलेपेन प्रयोज्य स्त्री कामुकं वशीकरोति । विधिरत्र द्रव्यचतुर्गुणं तैलं तच्चतुर्गुणं जलं पक्वं लेपमात्रमिति ॥ ५९ ॥

**माळइपसूणसाहिअतेळ्ळब्भ(ङ्गो ? त्ते) वरङ्गकुहरम्मि ।**
**महिळाण सुरअसमए होइ पई दासपडिरूवो ॥ ६० ॥**

मालतीप्रसूनसाधिततैलाभ्यक्ते वराङ्गकुहरे ।
महेलानां सुरतसमये भवति पतिर्दासप्रतिरूपः ॥

सुमनःपुष्परुक्तेन विधिना साधितं यत् तिलतैलं तेन सुरतसमये क्षिप्ते संसारमार्गविवरे कामिनी कामुकमत्यन्तवश्यं करोतीति ॥ ६० ॥

**पसुवइजळवट्टिअणिंबदारुगुग्गुलुरसञ्जणकएण ।**
**महिळा वरङ्गधूएण णिअदइअं वसे कुणइ ॥ ६१ ॥**

पशुपतिसलिलवर्तितनिम्बदारुगुग्गुलुरसाञ्जनकृतेन ।
महेला वराङ्गधूपेन निजदयितं वशीकरोति ॥

छागमूत्रपिष्टैः पिचुमन्ददेवदारुपुरभागैः कृतो निर्मितो यो धूपः तेन महेला वराङ्गं धूपयति कामुकं वशे करोतीति ॥ ६१ ॥

**दप्पिअपसुवइजळपिट्ठवाणरीमूळळेविउम्मळिअं ।**
**ण पडइ ळिङ्गं खरकोरिखररआ (आ) ससुढिअं पि ॥६२॥**

दर्पितपशुपतिजलपिष्टवानरीमूललेपितोद्वर्तितम् ।
न पतति लिङ्गं खरखारीखररतायाससूदितमपि ॥

मत्तबस्तप्रस्रवेण निघृष्टयद्वानार्याः कपिकच्छ्वा मूलं तेन लिप्तं यदुद्वर्तितं चिह्नं कर्कशाधमदासीनिधुवनक्लेशकदर्थितमपि पुंश्चिह्नं स्तब्धत्वं न जहातीति ॥ ६२ ॥

**सत्ताहं पसुवइसलिलभाविअं करहवारुणीमूळं ।**
**गाढोव्वट्टणविहिणा कुणइ रए साहणत्थम्भं ॥ ६३ ॥**

(सप्ताहं) पशुपतिसलिलभावितं करभवारुणीमूलम् ।
गाढोद्वर्तनविधिना करोति रते साधनस्तम्भम् ॥

सप्त दिनानि छागमूत्रेण भावितमुष्ट्रवारुणीमूलं पिष्टं सद् बहलेनोद्वर्तनकर्मणा सुरते ध्वजस्तम्भम(म ? मु)पहरतीति ॥ ६३ ॥

**कमपरिवड्ढिअटंकणपिप्पळितण्डुळविसेहि पिट्ठेहि ।**
**ळेविअधोएण णरो ळिङ्गेण चिरं रए मळइ ॥ ६४ ॥**

क्रमपरिवर्धितटङ्कणपिप्पलितण्डुलवि(षयीः ? षैः पिष्टैः) ।
विलिप्तधौतेन नरो लिङ्गेन चिरं (ओरमओ ? रते मिलति)॥

टङ्कणं सुवर्णपादिका, पिप्पलीतण्डुलं मागधिकाबीजानि, विषं मुस्तादि, एतैरुत्तरोत्तरवृद्ध्या गृहीत्वा पिष्टैः प्रथमं लिप्तेन पश्चाद्धौतेन ध्वजेन बहलं निधुवने क्रीडतीति ॥ ६४ ॥

**मण्डोक्कवसाकुरुविळ्ळखण्डखण्डेहिं काढिअं दुद्धं ।**
**भअधूमधअत्थंभं करेइ चरणअळळेवेण ॥ ६५ ॥**

**मण्डूकवसाकुरुविल्लखण्डखण्डैः क्वथितं दुग्धम् ।**
**(ध्वज)धूमध्वजस्तम्भं करोति चरणतललेपेन ॥**

दुर्दुरस्नेहेन तथा कुरुविल्लस्य कुलीराख्यस्य मत्स्यस्य (खण्ड)खण्डैः पिशितशकलैः सह क्वथितं क्षीरं (ध्वजस्य धूम) ध्वजस्य वाग्नेः स्तम्भं करोति। तेन लिप्तपादश्चिरं स्तब्धध्वजो भवति अग्निना च न दह्यत इत्यर्थः ॥ ६५ ॥

**सिद्धं कुसुम्भतेळ्ळं भूमिळआचुण्णमीसिअं विहिणा ।**
**चळणब्भंगेण रए (करेइ) ण(र?रं) ख(रअ)रुच्छाहं॥६६॥**

**सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं विधिना ।**
**चरणाभ्यङ्गेन रते करोति नरं खरतरोत्साहम् ॥**

कुसुम्भस्य पद्मकस्य बीजोद्भवं तैलं गण्डूपदचूर्णेन (कुरु? खर) पचनविधिना साधितं पादलेपेन रतिविषये पुरुषं तरुणरासभं करोतीति ॥ ६६ ॥

**णीळुप्पळसिअपंकअकेसरमहुसक्कराविळित्तेण ।**
**सुरअम्मि चिरं कीळइ दढळिंगो णाहिविवरेण ॥ ६७॥**

**नीलोत्पलसितपङ्कजकेसरमधुशर्कराविलिप्तेन ।**
**सुरते चिरं क्रीडति दृढलिङ्गो नाभिविवरेण ॥**

कुवलयेन तथा श्वेतपद्मकिञ्जल्केन तथा मधुशर्कराभ्यां लिप्तेन नाभिकुहरेण पुरुषः स्तब्धलिङ्गः सन् सुरते चिरं रमत इति ॥ ६७॥

**सिअवाअसजंघामूळोम्मीसकमळकेसरमहूहिं ।**
**णाहीहिं कओ ळेवो बीअत्थम्भं रए कुणइ ॥ ६८ ॥**

**सितवायसजङ्घामूलोन्मिश्रकमलकेसरमधुभिः ।**
**नाभौ कृतो लेपो बीजस्तम्भं रते करोति ॥**

श्वेतायाः काकजङ्घाया मूलेन तथा किञ्जल्केन तथाच मधुना एतैर्मिश्रैः सम्पादितो नाभिविवराभ्यङ्गो रतौ वीर्यनिरोधं करोति चिरं रम(य)तीत्यर्थः ॥६८॥

**छीरलिळचुलुंपादुद्धव(त्ति)अं चलणजुअळलेवेण ।**
**कुणइ समंगामूळं वीअत्थम्भं रए सुइरं ॥ ६९ ॥**

छीरलिगविकादुग्धवर्तितं चरणयुगळविलेपन ।
करोति समङ्गामूलं बीजस्तम्भं रते सुचिरम् ॥

सुधायास्तथा छगल्याः क्षीरेण पिष्टं लज्जालुकाया मूलं पादद्वयलेपेन रतौ पूर्वोक्तं कार्यं करोतीति ॥ ६९ ॥

**सिअसरिसवमिरिअवआविसाणसुरसाविळङ्गवीएहि ।**
**दुस्सीळगोवसीअरणमञ्जणं पसुवइजळेण ॥ ७० ॥**

सितसर्षपमरिचवचाविषाणसुरसाविळङ्गबीजैः ।
दुश्शीलगवीवशीकरणमञ्जनं पशुपतिजलेन ॥

गौरसिद्धार्थकृष्णोग्रगन्धाकुष्ठखञ्जकाक्रमिघ्नबीजैः छागमूत्रपिष्टैः कृतमञ्जनं दुष्टानां धेनूनां दमनमिति ॥ ७० ॥

**इअएस परिसमत्तो विविहवसीअरणजोअसंपुण्णो ।**
**हरमेहळाए तइओ विअद्धदइओ परिच्छेओ ॥ ७१ ॥**

इत्येष परिसमा(प्यते? प्तो) विविधवशीकरणयोगसंपूर्णः ।
हरमेखलायास्तृतीयो विदग्धदयितः परिच्छेदः ॥

स्पष्टमेतत् ॥ ७१ ॥

इति हरमेखलायां तृतीयः परिच्छेदः ।

---

## अथ चतुर्थः परिच्छेदः ।

**वेसाण विअद्धाण अ सरीरपरिअम्मजणिअपरिओसं ।**
**साहेमि चउत्थमहं सम्पइ विउळं परिच्छेअं ॥ १ ॥**

वेश्यानां विदग्धानां च शरीरपरिकर्मजनि(त)परितोषम् ।
साधयामि चतुर्थमहं सम्प्रति विपुलं परिच्छेदम् ॥

वेश्याविदग्धग्रहणं पूर्वपरिच्छेदक्रमानुसरणमात्रम् । वक्ष्यमाणं तु सर्वसाधारणम् । शिष्टः सुबोधः ॥ १ ॥

**करिदसणामलअमसीभअगरअविपक्कतेल्लकल्लविआ ।**
**लेवेण कुणइ फुडं खल्लीविवि कुञ्चिए चिहुरे ॥ २ ॥**

करिदशनामलकमषीभृङ्ग(राजो ? रस)विपक्कतैलार्द्रीकृतान् ॥
लेपेन करो(ति) स्फुटं खलतेरपि कुञ्चितान् चिकुरान् ॥

हस्तिदन्तं धात्रीफलं च पुटपाकेन मषीकृत्य मार्कवरसेन विपक्कं तेन मिश्रित(धाम ?)स्य लेपः खल्वाटस्यापि कुटिलान् केशानापादयति । किं पुनरन्यस्य । तैलपाकविधिः समूलस्य मार्कवस्य च पले तत्स्वरसस्य द्वात्रिंशत् पलानि तिलतैलपलान्यष्टौ तान्येव ग्राह्याणीति स्वरसपाकेन सर्वत्रैषैव स्थितिः ॥ २ ॥

**छाअच्छीररसञ्जणपुडदड्ढगइन्ददन्तमसिलित्ता ॥**
**जाअन्ति सत्तरत्ता खल्लीउवि कुञ्चिआ केसा ॥ ३ ॥**

छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमषीलिप्ताः ।
जायन्ते सप्तरात्रात् खलतेरपि कुञ्चिताः केशाः ॥

अजादुग्धरसाञ्जनाभ्यां मिश्रितया पुटपाकदग्धकरिदशनमष्या लिप्ताः केशाः पूर्ववत् श्रेष्ठा भवन्तीति ॥ ३ ॥

**भंगरअरसोम्मीसिअगुञ्जाफल(चुण्ण)साहिअं तेल्लं ।**
**कुणइ सिरोरुहरिद्धिं कुट्ठमुरातुडिजडासहिअं ॥ ४ ॥**

भृङ्गर(जो ? सो)न्मिश्रितगुञ्जाफलचूर्णसाधितं तैलम् ।
करोति शिरोरुहवृद्धिं कुष्ठमुरातुटिजटासहितम् ॥

मार्कवरसेन गर्भीकृतरक्तिकाचूर्णेन पूर्वोक्तपरिमाणस्थित्यादिना नि-(च ? चितं) तैलं विषागेन मधुरया सुगन्धमुरया तु(ल्या ? टिभिः) सूक्ष्मैलाभिर्जटया मांस्या च तैर्मिश्रीकृतचूर्णितैः सहितं केशसम्पत्तिं करोतीति ॥ ४ ॥

**भल्लाअअबुहईफलगुञ्जामूलप्फलाण एक्केण ।**
**महुसहिएण विलित्तं सुरवइलुत्तं समन्छाइ ॥ ५ ॥**

भल्लातकबृहतीफलगुञ्जामूलफलानामेकेन ।
मधुसहितेन विलिप्तं सुरपतिलुप्तं श(मय ? मं या)ति ॥

भल्लातकमरुष्करम् । बृहतीफलं कण्टकालिकाफलम् । गुञ्जाया रक्तिकाया मूलं फलं वा । एतेषां मध्यादन्यतमेन चूर्णीकृतेन माक्षिकेसति तेनाभ्यक्तमिन्द्रलुप्तसंज्ञया प्रसिद्धं शिरसि श्मश्रुणि वा लुप्तलोमरूपव्याधिजातं शमं याति विनश्यतीति ॥ ५ ॥

**पिट्ठेहि कसणरोहिणिमुत्तमीसेहि जवअकुसुमेहि ।**
**कअलेवमिन्दलुत्तं घणचिहुरमणोहरं होइ ॥ ६ ॥**

**पिष्टैः कृष्णरोहिणीमूत्रमिश्रैर्जपाकुसुमैः ।**
**कृतलेपमिन्द्रलुप्तं (कनक ? घन)चिकुरमनोहरं भवति ॥**

जपापुष्पाण्युड्रपुष्पाणीति प्रसिद्धानि । तैः पिष्टैः कृष्णाया रोहिण्या धेनोः प्रस्रवेण मिश्रितैर्लिप्तं पूर्वोक्तमिन्द्रलुप्ताख्यं व्याधिजातं पुनर्जातमनोहरकेशं भवतीति ॥ ६ ॥

**बुहईफळरसघट्टं गुञ्जामूळं फळं व लेवेण ।**
**कञ्चणणिहट्टपच्छिअसमराहिवमुण्डिअं हरइ ॥ ७ ॥**

**बृहतीफलरसघृष्टं गुञ्जामूलं फलं वा लेपेन ।**
**काञ्चननिघृष्टप्रच्छितममराधिपमुण्डितं हरति ॥**

कण्टकालीफलरसेन पिष्टं रक्तिकानां मूलं फलं वा लेपेन पूर्वोक्तमिन्द्रलुप्तं हरति । कीदृशमिन्द्रलुप्तं, पूर्वं सुवर्णेन निघृष्टं पश्चात् सूक्ष्मशस्त्रेण कृतक्षतमिति । सर्वेषामिन्द्रलुप्तलेपानां निघर्षणप्रच्छादनविधिः साधारणः ॥ ७ ॥

**पसुगन्धाणीळुप्पळतिळकळिफळमज्जमहुअछल्लीहि ।**
**गुण्डिअसिराण चिहुरा ण पडन्ति पिअंगुसहिएहि ॥ ८ ॥**

**पशुगन्धानीलोत्पलतिलकलिफल(मज्ज)मधुकत्वग्भिः ।**
**गुण्डितशिरसां केशा न पतन्ति प्रियङ्गुसहितैः ॥**

पशुगन्धा अविगन्धा पूतिपर्वरक इति प्रसिद्धः । नीलोत्पलं कुवलयम् । तिलाः प्रसिद्धाः । कलिफलं विभीतकफलं तस्य मज्जा अण्डसारः । मधुकस्य मधुयष्ट्यास्त्वगेतैः श्यामया सहितैः लिप्तमूर्ध्नां कचा न पतन्ति स्थिरीभवन्ति। अत्र लेपत्वापादनाय द्रवद्रव्यं जलमेव ग्राह्यम् । विशेषानुक्तौ सर्वत्रैषैव स्थितिरिति ॥ ८ ॥

**आमळअकुट्ठकुवळअमंसिबळालेविअम्मि सीसम्मि ।**
**अइरा विरळा वि घणा जाअन्ति मणोहरा चिहुरा ॥९॥**

आमलककुष्ठकुवलयमांसीबलालिप्ते शीर्षे ।
अचिराद् विरला अपि घना जायन्ते मनोहराश्चिकुराः ॥

धात्रीफलविषाणोत्पलनलदैस्तथा बलया अनयैव संज्ञया प्रसिद्धया कृतलेपेन लिप्ते मस्तके लुप्तत्वाद्विरला अ(पि) केशाः संहता रम्याश्च पुनर्जायन्ते इति ॥ ९ ॥

**माअन्दबीअमीसिअह्लाणामळएहि गुण्डिआ चिहुरा ।**
**ण पडन्ति दढबद्धमूळघणदीहरसिणिद्धा ॥ १० ॥**

आम्रबीजमिश्रितस्नानामलकैर्गुण्ठिताश्चिकुराः ।
न पतन्ति भवन्ति दृढबद्धमूलघनस्निग्धदीर्घाः ॥

आम्रफलमज्जाभ्यन्तरवर्ति यत् सारं तेन मिश्रितैः स्नानार्थमुपसाधितैः सुगन्धामलकैर्लिप्ते शिरसि सति केशा न केवलं न पतन्ति, यावत् सर्वैः स्वगुणैः संयुक्ता भवन्तीति । स्नानामलकविधिं पञ्चमे वक्ष्यति ॥ १० ॥

**समणीळोप्पळकेसरळट्ठिमहुतिलेहि सरिसामळअं ।**
**सीसम्मि चिरपरूढं पि उप्पिआसं समुप्पुसइ ॥ ११ ॥**

समनीलोत्पलकेसरयष्टिमधुतिलैः सदृशामलकम् ।
शीर्षे चिरप्ररूढमपि दारुणं समुन्मूलयति ॥

समानैस्तुल्यभागैः कुवलयेन नागकेसरेण मधुयष्ट्या तिलेन चैत्यैतैः सर्वैः समानैर्धात्रीफलं शीर्षे दत्तं सत्वक्चटनरूपं व्याधिजातम् उप्पियासमिति देशीपदे व्याख्यातं निवारयति ॥ ११ ॥

**रविदुद्धोळळन्तरधूमदड्ढसुहमासचुण्णमसिमीसं ।**
**लेवेण सअळसिररोअविउडणं कुणइ कडुतेळ्ळं ॥ १२ ॥**

रविदुग्धार्द्रान्त(र)धूमनिदग्धशुभमाषचूर्णमषीमिश्रम् ।
लेपेन सकलशिरोरोगविघटनं करोति कटुतैलम् ॥

अर्कक्षीरेणार्द्रीकृताः सन्तो धूपेन पुटपाकेन विदग्धा विशोषिता ये (मा)-षास्तच्चूर्णजा यासौ मषी तया मिश्रं कटुतैलं सर्षपतैलं तदलाभे गुल्गुलुबीजतैलं लेपेन शिरोभ्यञ्जनेन सर्वेषां शिरोरोगाणां विनाशं करोति इति ॥ १२ ॥

**आमळअफळकअमाळकिसळअप्पम्माडवीअळक्खाहि ।**
**लेओ सीसम्मि कओ दारुणमवि हरइ दारणअं ॥ १३ ॥**

आमलकफलकृतमालकिसलयप्रपुन्नाटवीजलाक्षाभिः ।
लेपः शीर्षे कृतो दारुणमपि हरति दारकम् ॥

धात्रीफलमारग्वधप्रवालमेळकबीजं दीसिश्चेत्येतैः लेपो घोरमपि दारुणं शीर्षत्वग्विकारमुप्पियासमिति प्रागुक्तं निवारयतीति ॥ १३ ॥

**लेओ घणचण्डासुरविसाणतणुदलणिसाहळदीहि ।**
**दारणअपमुहसिररूढचिहुररिउणो विणासेइ ॥ १४ ॥**

लेपो घनचण्डासुरविषाणतनुदलनिशाहरिद्राभिः ।
दारणकप्रमुखशिरोरूढचिकुररिपून् विनाशयति ॥

घनो मुस्ता चण्डा चोरकभेदः काष्ठगुग्गुलुरिति प्रसिद्धः, असुरः, (सुरः?) विषाणं कुष्ठं, तनुदलं तमालपत्रं, निशा दारुहरिद्रा पिण्डहरिद्रेत्येतैः कृतोऽसावालेपः प्रागुक्तान् दारणप्रमुखान् सर्वाञ्शिरप्ररूढानपि केशव्याधीन् विनाशयति॥ १४ ॥

**णिग्गुण्डिफ(लि)णिरूविअसिद्धं सिद्धं व्व मोरअफळेहि ।**
**तेळं सिररो(अ)हरणमब्भंगजुत्तीए ॥ १५ ॥**

निर्गुण्डीफलिनीरूपिकसिद्धं सिद्धं वा मयूरकफलैः ।
तैलं शिरोरोगहरणमभ्यङ्गयुक्त्या ॥

निर्गुण्डी भूतकेशी । फलिनी लाङ्गली । रू(णी? पि)कोऽर्कवृक्षः एतैः पूर्वोक्तर....ष्यां विधिना सिद्धम् अथवा अपामार्गफलसिद्धं तिलतैलं शिरोरोगहरणं लेपयुक्त्या मूर्धरोगाणां समूहोत्सादनं भवतीति ॥ १५ ॥

**खप्परभज्जणा वा चुण्णिएण कुट्ठेण तेळसहिएण ।**
**चिररूढरूसिआदाहकण्डुविअणाओ णासेन्ति ॥ १६ ॥**

खर्परभर्जना(द्) वा चूर्णितेन कुष्ठेन तैल(सुलिप्ते? सहिते)न ।
चिररूढपिटकादाहकण्डुवेदना (नाशय? नश्य)न्ति ॥

खर्परे मृत्पात्रकपाले भृष्टं यत् कुष्ठं तेन तैलेन च सहितेन शिरोभ्यङ्गात् तज्जानां रुषकाख्यानां सूक्ष्मपिटकानां सम्बन्धी यो दाहः कण्डूश्च तत्कृता वेदना नश्यन्तीति ॥ १६ ॥

**अतरुणाविळ्ळसिरेण व धोओ गुळपाणिएण व जहिच्छं ।**
**मूढो वि होइ सहसा विसंखळो चिहुरपब्भारो ॥ १७ ॥**

अतरुणबिल्वशिरसा वा धौतो गुळपानीयेन वा यथेष्टम् ।
मूढोऽपि भवति सहसा विशृङ्खलश्चिकुरप्राग्भारः ॥

अतरुणस्य पक्वस्य बिल्वफलस्य मज्ज्ञा वा शोधितस्य गुलस्य जलेन वा अभ्यक्तः केशसमूहो जटीभूतोऽपि विविक्तो भवतीति ॥ १७ ॥

**फणिवळ्ळीदळरसमिळिअमसिणपारअविळेविआ चेळी ।**
**(आअर)सेइ णिवद्धा सिरम्मि णीसेसजूअसंघाओ ॥१८॥**

फणिवल्लीदलरसमिलितमसृणपारतविलिप्ता चीरिका ।
आकर्षति निबद्धा (शिरसि निश्शेषयूकसङ्घातान् ॥)

तद्गतान् यूकाख्यान् जन्तूनाकर्षति ततो विद्वेषयतीति ॥ १८ ॥

**सविळंगगन्धआसिळासिद्धं सुर(भि? भी)जळेन कडुतेळ्ळं ।**
**आजम्म णेइ खअं ळिक्खासहिआउ जूअसंघाउ ॥ १९ ॥**

सविळङ्गगन्धकशिलासिद्धं सुरभिजलेन कटुतैलम् ।
आजन्म नयति क्षयं लीक्षासहितान् यूकसङ्घातान् ॥

कृमिघ्नेन सह गन्धपाषाणमनश्शिलाभ्यां गर्भक्षिप्ताभ्यां गोमूत्रेण पूर्वोक्तशुद्धाम्बुयुक्त्या सिद्धं सम्पन्नं कटुतैलं केशाभ्यङ्गाद् यावज्जीवं सलीक्षा यूकाः क्षपयन्ति । पुनस्ता न भवन्तीत्यर्थः ॥ १९ ॥

**णवधद्धसंखचुण्णआणिहट्टसीसअविळेविआ चिहुरा ।**
**ससिकिरणकन्तिधवळा वि होन्ति भमरउळसच्छाआ ॥**
**[२० ॥**

नवदग्धशङ्खचूर्णकनिघृष्टसीस(क)विलिप्ताश्चिकुराः ।
शशिकिरणकान्तिधवला अपि भवन्ति भ्रमरकुलसच्छायाः ॥

तत्कालं पुटपाकदग्धस्य शङ्खस्य कच्चोर्यकचूर्णकेन निघृष्टं समरसी कृतं यत् सीसकं नागं तेन लिप्ताः केशाः पलितशुक्ला अपि भ्रमरवत् कृष्णीभवन्तीति ॥ २० ॥

**भंगरअळोहतिहलावीअअ कणवीरणीलिसमभाअं ।**
**बहुसो कअगुळधूवं करेइ कसणाइ पलिआइ ॥ २१ ॥**

**भृङ्गरजोलोहत्रिफलाबीजककणवीरनीलीसमभागम् ।**
**बहुशः कृतगुलधूपं करोति कृष्णानि पलितानि ॥**

मार्कवशस्त्रचूर्णत्रिफला असनहयमारनीलीनां समभागा यस्मिन् तत् तथाविधं द्रव्यं बहुवारं गुलधूपेन कृताधिवासं लेपेन जराशुक्लान् कृष्णयतीति ॥ २१ ॥

**माअन्दवीअतिहलाणीलीभंगरअपंकलोहेहि ।**
**पलिआइ कुणइ लेवो सकञ्जिओ अलिउन्दणीहाइ ॥२२॥**

**आम्रबीजत्रिफलानीलीभृङ्गर(जः ? स)पङ्कलोहैः ।**
**पलितानि करोति लेपः सकाञ्जिकोऽलिकुलनिभानि ॥**

आम्रास्थिसारं त्रिफला तथा नेकराजरसः पङ्कः पद्मिनीतले कर्दम. शस्त्रचूर्णमित्येतैः काञ्जिकसंयुक्तैर्लेपो जरां नाशयतीति ॥ २२ ॥

**कच्चूरतअरसामासेलेहि समं सुवट्टिआ रअणी ।**
**रञ्जेइ धवलचिहुरे जणस्स गुळधूविए बहुसो ॥ २३ ॥**

**कच्चूरतगरश्यामाशैलैः समं सुवर्तिता रजनी ।**
**रञ्जयति धवलचिकुरान् जनस्य गुलधूपितान् बहुशः ॥**

कच्चूरं कळयमिति प्रसिद्धं, तेन, तथा कुटिलं तथा प्रियङ्गूः तथा शैलं शिलापुष्पम् एतैः सह सुपिष्टा हरिद्रा । किमुक्तं भवति । कच्चूरादीनां चतुर्णां समांशानां यावत् परिमाणं तावत् प्रमाणं हरिद्रा, सा बहुशो गुळधूपकृताधिवासा पलितं नाशयतीति ॥ २३ ॥

**सेलुसिवाखंभरीकाअणिकलिरुक्खणिम्बतेल्लेण ।**
**णासेइ पलिअविउडणमेक्केक्कं दुद्धणिरअस्स ॥ २४ ॥**

**शेलुशिवाखंभारीकाकनिकलिवृक्षनिम्बतैलानाम् ।**
**नस्येन पलितविघटनमेकैकं दुग्धनिरतस्य ॥**

क्षीराहारस्य सतः पुरुषस्य शेल्वादिफलानां सम्बन्धि तैलं नस्येनोपयुक्तं पलितं नाशयति । तत्र शेलुः श्लेष्मातकः । शिवा हरीतकी । खम्भारी श्रीपर्णी

काकनी गुञ्जा कलिवृक्षो विभीतकः निम्बः पिचुमन्दः एतेषामेकतमस्यापि फलसारनिर्गतेन तैलेन नस्यप्रयोगाद् उक्तफलसम्पत्तिरिति ॥ २४ ॥

**समतिळकाकणिआबीअचुण्णतेळ्ळेण णावणं दिण्णं ।**
**कुणइ घणकसणकुडिळं सुसिणिद्धं कुन्तळकळावं ॥ २५ ॥**

**समतिलकाकनिकाबीजचूर्णतैलेन नावनं दत्तम् ।**
**करोति घनकृष्णकुटिलं (सुस्निग्धं) कुन्तलकलापम् ॥**

समास्तुल्यभागा यस्य तिलास्तादृशं यद् गुञ्जाफलान्तर्वर्तिसारचूर्णं तदुद्भवेन तैलेन प्रयुक्तं नस्यं चिकुरचयं सर्वं निजगुणैः संयुक्तं करोतीति ॥२५॥

**कञ्जिअवट्टिअपरिपक्कसेळुफळमज्जळित्ततविआहि ।**
**खररविअरेहि तेळ्ळं परिच्चुअं ळोहतण्णाहि ॥ २६ ॥**
**अब्भंगणासविहिणा सिहिगळणीळाइ कुणइ पळिआइं ।**
**गळदसणसवणणासामुहणअणविआरसमणञ्च ॥ २७ ॥**

**काञ्चिकवर्तितपरिपक्वशेलुफलमज्जलिप्ततप्तात् ।**
**खररविकरैस्तैलं परिच्युतं लोहभाण्डात् ॥**
**अभ्यङ्गनस्यविधिना शिखिगलनीलानि करोति पलितानि ।**
**गलदशनश्रवणनासामुखनयनविकारशमनं च ॥**

काञ्चिकेन आरनालेन पिष्टो योऽसौ श्लेष्मातकस्य फलस्य मज्जा सारः तेनाभ्य(क्तं ? क्तात्) शस्त्रमयाद् भाजनात् तीक्ष्णार्करश्मिभिस्तापिताद् यत्तैलं प्रस्रवति, तेन नस्याभ्यङ्गप्रयुक्तेन मयूरकण्ठकृष्णानि पलितानि संपद्यन्ते। तथा तत् तैलं कण्ठादिविकारान् शमयतीति युगलकम् ॥ २६,२७ ॥

**विहिणा सिहिसिहभङ्गरअसरससिद्धेण सुरहिसारेण ।**
**कअणावणाण णासन्ति सत्तरत्तेण पळिआइं ॥ २८ ॥**

**विधिना शिखिशिखाभृङ्गराजस्वरससिद्धेन सुरभिसारेण ।**
**कृतनाव(ना)नां नश्यन्ति सप्तरात्रेण पलितानि ॥**

शिखिशिखा मयूरशिखा मार्कवस्वरसे हि कल्कीकृत्य सिद्धं यत् सुरभिसारं घृतं तेन नस्यप्रयोगेण सप्तरात्रं प्रयुक्तं जरां विनाशयति । सिद्धिरत्र स्वरससिद्धतैलस्य पूर्वमुक्तो यः स (एवमि ? वे)ति ॥ २८ ॥

**अइकम्मळकञ्चिअवट्टिएहि एरण्डमूळकुट्टेहि ।**
**पउणाडळेविआ वा सिराविअणा दूरमोसरइ ॥ २९ ॥**

अत्यम्लकाञ्जिकगर्तिताभ्यामेरण्डमूलकुष्ठाभ्याम् ।
प्रपुन्नाटलिप्ता वा शिरोवेदना दूरमपसरति ॥

चुक्रारनालपिष्टाभ्यां गन्धर्वविषाणमूलाभ्यां शिरआर्तिर्नश्यति । अथवा एळकबीजेन पूर्वोक्तद्रव्यपिष्टेन लेपान्नश्यतीति ॥ २९ ॥

**तेळ्ळोळ्ळवत्थवेढिअसुरबिल्लकिळिञ्जआण एक्कस्स ।**
**जळणादीविअगळिआ सिमिसिमिआ हरइ सुइसूलं ॥३०॥**

**तैलार्द्रवस्त्रवेष्टितसुरबिल्वसूक्ष्मदारुणोरेकस्य ।**
**ज्व(लिता ? लना)दीपितगळिता सिमिसिमा हरति श्रुतिशूलम् ॥**

तिलतैलेनार्द्रीकृतं यद् वस्त्रं तेन वेष्टितयोर्देवदारुमाल्लरसूक्ष्मकाष्ठयोर्मध्यादेकत(म ? र)स्य सम्बन्धिनी अग्निप्रज्वलिना सती गळिता प्रस्नुता यासौ सिमिसिमाशब्दोपलक्षिता स्नेहकणिका सा कर्णान्त प्रविष्टा कर्णरुजं हरतीति ॥ ३० ॥

**हिङ्गुवआमिसिसिन्धवणाअरसुरदारुकुट्ठपरिपक्कं ।**
**गोमअरसेण तेळ्ळं समत्थसुइरोअविद्दवणं ॥ ३१ ॥**

**हिङ्गुवचामिसिसैन्धवनागरसुरदारुकुष्ठपरिपक्कम् ।**
**गोमयरसेन तैलं समस्तश्रुतिरोग(निर्मळनम् ?) ॥**

राम(ठाश्व ? ठोग्र)गन्धाभ्यां तथा मिस्या शतपुष्पया लवणेन शुण्ठ्या देवदारुणा वा चव्येन च गोशकृद्रसकल्कितेन सिद्धं तैलं श्रवणगदविनाशनम् । पचनीविधिरत्र स्वरससाध्यतैलवदिति ॥ ३१ ॥

**रूविअदळवेढिअजळणासिण्णळसुणंबु सवणसूळहरं ।**
**सवणाण भरणविहिणा गोसे णिहुडुंगितोयं वा ॥ ३२ ॥**

**रूपिकादलवेष्टितज्वलनस्विन्नलशुनाम्बु श्रवणशूलहरम् ।**
**श्रवणानां भरणविधिना प्रभाते निहुड्गितोयं वा ॥**

अकपल्ल(वरस ? वे)न वेष्टितं यद् रसोनमूलं ज्वलने मन्दाग्नौ कुकूले स्विन्नं द्रवो निष्पीडनान्निष्क्रान्तः तेन कर्णपूरणात् श्रवणशूलहरः । अथवा सुधावृक्षजलं श्रवणपूरणविधिना शूलमपहरति । सुधावृक्षस्य यावद(रुण)स्योदयो न जातस्तावद्यज्जलं स्रवति, तस्यायं प्रयोग इति ॥ ३२ ॥

**ओस(रइ) सइन्धवमीसमुत्तपरिपूरिआण सवणाण ।**
**विअळन्तपूअविअणातुराण दुक्खं मुहुत्तेण ॥ ३३ ॥**

**अपसरति (स)सैन्धवमेषमूत्रपरिपूरितयोः श्रवणयोः ।**
**विगलत्पूयवेदनातुरयोः दुःखं मुहूर्तेन ॥**

मेषशब्देनात्र छागो विवक्षित इत्याचार्यास्तेन सैन्धवयुक्तलवणेन छागमूत्रेण कृतपूरणयोः कर्णयोः स्यन्दमानपूतिजनितव्यथयोरपि घटिकाद्वयमात्रपूरणात् शूलं निवर्तत इति ॥ ३३ ॥

**माळइदळकुसुमरसेहि पूरिअं गोजळेण भरिअं पि ।**
**दूरेण परिहरिज्जइ सवणजुअं पूइरोएण ॥ ३४ ॥**

**मालतीदलकुसुमरसाभ्यां पूरितं गोजलेन भरितं वा ।**
**दूरेण परिह्रियते श्रवणयुगं पूतिरोगेण ॥**

सुमनःपल्लवाभ्यां (कुसुम)रसेन च माक्षिकेण च अथवा गोमूत्रेणैव च पूरितं कर्णयुग्मं कर्णस्रावव्याधिना वर्ज्यते । स तस्य पुरुषस्य पुनर्न भवतीत्यर्थः ॥ ३४ ॥

**माहिसणवणीअजुअं सत्ताहं धण्णरासिपरिवासिअं ।**
**णवमुसळिकन्दचुण्णं विद्धिअरं कण्णपाळीण ॥ ३५ ॥**

**माहिषनवनीतयुतं सप्ताहं धान्यराशिपर्युषितम् ।**
**नवमुसलीकन्दचूर्णं वृद्धिकरं कर्णपालीनाम् ॥**

नवायाः प्रत्यग्राया मुसल्याः क्षुरिकाया मूलस्य चूर्णं महिषीनवनीतेन संयुक्तं सप्ताहोरात्रं व्रीहिकूटमध्ये स्थापितं तदभ्यङ्गाभ्यासात् कर्णपाली वर्धते इति ॥ ३५ ॥

**गुञ्जाफळचुण्णम्मीसजाअमाहिसपउब्भवं कुणइ ।**
**घअमणुदिणमब्भंगेण कण्णविद्धिं जहिच्छाइं ॥ ३६ ॥**

**गुञ्जाफलचूर्णोन्मिश्रितजातमाहिषपयोद्भवं करोति ।**
**घृतमनुदिनमभ्यङ्गेन कर्णवृद्धिं यथेच्छया ॥**

रक्तिकाफलसारचूर्णेन सहितं यन्माहिषं पयः क्वथितं ततो दधिभूतादुत्पन्नं यन्नवनीतं तत्सिद्धं यद् घृतं तदभ्यङ्गाभ्यासाद् यथारुचि श्रोत्रपालीवृद्धिं करोति ॥ ३६ ॥

**विसगब्भत्तित्ताळाउतेल्लअट्ठउणखरजळविपक्कं ।**
**एक्कब्भंगेण वि कुणइ कण्णपाळीउ विउळाउ ॥ ३७ ॥**

विषगर्भतिक्तालाबुतैलमष्टगुणखरजलविपक्कम् ।
एकाभ्यङ्गेनापि करोति कर्णपालीर्विपुलाः ॥

कटुतुम्ब्या बीजोद्भूतं तैलमष्टभागमात्रं विषसंयुक्तं तैलादष्टगुणेन रासभमूत्रेण पक्कं सकृदभ्यङ्गात् कर्णपालीवृद्धिं करोतीति ॥ ३७ ॥

**सिअसरिसववुहईफळरोहिअझसपित्तसुरभिपिसि-**
**[एहि ।**
**होइ थणसवणविद्धी माहिसणवणीअसहिएहि ॥ ३८ ॥**

सितसर्षपबृहतीफलरोहितझषपित्तगोपिशितैः ।
भवति स्तनश्रवणवृद्धिर्माहिषनवनीतसहितैः ॥

गौरसिद्धार्थकण्टकालीफलाभ्यां सह रोहिताख्यस्य मत्स्यस्य पित्तं रोहिषीद्रव्यं चैताभ्यां शुष्कचूर्णीकृताभ्यां तथा माहिषनवनीतेन युक्ताभ्यामभ्यङ्गाभ्यां कर्णकुचवृद्धिर्भवतीति ॥ ३८ ॥

**कुसुमरसतअरमोरअसिअसरिसववुहइपिप्पळिति-**
**[ळेहि ।**
**हयगन्धसिन्धवमरीअकुट्ठजवमासमीसेहि ॥ ३९ ॥**

**उम्मळअमिन्नमो सवणपाणिथणळिंगबाहुसिहराण ।**
**कुणइ सई किरमाणं विद्धिं णिउणो गुणाण व्व ॥ ४० ॥**

कुसुमरसतगरमयूरकसितसर्षपबृहतीपिप्पलीतिलैः ।
हयगन्धसैन्धवमरीचकुष्ठयवमाषमिश्रैः ॥

उन्मळनमिदं श्रवणपाणिस्तनलिङ्गबाहुशिखराणाम् ॥
करोति सदा क्रियमाणं वृद्धिं निपुणो गुणानामिव ॥

माक्षिकं तथा कुटिलं तथा अपामार्गः तथा गौरसिद्धार्थः तथा कण्टकाली तथा कणा तथा तिलाः तथा अश्वगन्धा तथा लवणं तथा मरिचं तथा व्याधिस्तथ

यवास्तथा माषाश्चेत्येतैः समभागैः कृतमुद्वर्तनं कर्णकरकुचध्वजस्कन्धानां सदाभ्यस्यमा(नैः ? नं) वृद्धिं करोति गुणानां श्रुतानामभियुक्तो यथेति युगलकम् ॥ ३९, ४० ॥

**भल्लाअअबुहईफलदाडिमछल्लीहि(ता ? का)ढिअं [कुणइ ।**
**सरिसवतेल्लं लिंगं जणस्स हयलिंगपडिरूवं ॥ ४१ ॥**

भल्लातकबृहतीफलडाडिमत्वक्क्वथितं करोति ।
सर्षपतैलं लिङ्गं जनस्य हयलिङ्गप्रतिरूपम् ॥

अरुष्करकण्टकारीफल(दाडिम)त्वक्साधितं यत् पूर्वोक्तशुद्धाम्बुयुक्त्या सम्पादितं सिद्धार्थकतैलं तल्लोकस्याभ्यासात् महासाधनतां करोतीति ॥ ४१ ॥

**पुडदड्ढपुडइणिदलभल्लाअभसलिलकह्लोणाण ।**
**भूईअ कालपरिणअबुहईफलवारिपिट्ठाण ॥ ४२ ॥**
**महिसीपुरिसुम्मालिअं णरसाहणमणुविले होइ ।**
**मुसलव्व मम्महाउरजुअईजणदप्पविद्दवणं ॥ ४३ ॥**

पुट(पाक ?)दग्धपुटकिनी(दल)भल्लातकसलिलकृष्णलवणानाम् ।
भूत्या कालपर्युषितबृहतीफलवारिपिष्टानाम् ॥
महिषीपुरीषोन्मलितं नरसाधनमनुलिप्तं भवति ।
मुसलमिव मन्मथातुरयुवतिजनदर्पविद्रवणम् ॥

पुटपाकदग्धस्य (पुटकिनीदलस्य) तथा अरुष्करस्य तथा सलिलस्य वालकस्य तथा कृष्णलवणस्यार्कस्य चेत्येतेषां भसना सुपक्वकण्टकारीफलरस-मिश्रितेन प्रागिव शूलाक्षशकृतोद्वर्तितमभ्यञ्जानन्तरं वराङ्गं महत्त्वादुक्तकार्यक्षमं भवतीति युगलकम् ॥ ४२, ४३ ॥

**जलसूअरोहिणीपिसिअचुण्णमाहिसघडम्मालिज्जन्तं ।**
**लिंगं तरुणतुरंगमलिंगसमाणं समुव्वहइ ॥ ४४ ॥**

जलशूकरोहिणीपिशितचूर्णमाहिषघृतोन्मल्यमानम् ।
लिङ्गं तरुणतुरङ्गमलिङ्गप्रमाणमुद्वहति ॥

शैवालेन तथा ताम्रापलस्य शुष्कस्य चूर्णेन महिषघृतेन चोद्वर्त्यमानं लिङ्गमुक्तप्रमाणं भवतीति ॥ ४४ ॥

**वुहईफळमळ्ळिअअणाळिणीदळसिन्धुसळिळसूएहि ।**
**माहिसणवणीअकरंभिएहि हयपरिमळाच्छन्दो ॥ ४५ ॥**
**सत्ताहमेत्तवसिएहि सेरिहीकानकअदुम्मळअं (?) ।**
**ळित्तं इमेहि जाअइ ळहुइअखरसाहणं ळिंगं ॥ ४६ ॥**

पूर्वं महिषीनवनीतकृतोन्मलनम् (?) ।
लिप्तमेतैर्जायते लघूकृतखरसाधनकं लिङ्गम् ॥

पूर्वं महिषीशकृता गाढमुद्वर्तितं पश्चादेतैः सर्पिरश्वगन्धाया मूलमुत्कीर्णिन अन्तर्निहितैः (?) पश्चात् सप्ताहमात्रपर्युषितमिति युगलकम् ॥ ४५, ४६ ॥

**कणअरसमसिणवट्टिअहयगन्धाकन्दमीसिअं थविअं ।**
**माहिसणवणीअम्मि विगअविअधुत्तीरफळम्मि ॥ ४७ ॥**
**गोमअगाढुव्वट्टिअमेएण विळेविअं तिरत्तेण ।**
**होइ हयळिंगसरिसं ळिंगं कढिणंगणादइअं ॥ ४८ ॥**

कनक(रस)मसृणवर्तितहयगन्धाकन्दमिश्रितं पर्युषितम् ।
माहिषनवनीतं विगतबीजधुर्धूरकफले ॥
गोमयगाढोद्वर्तितमेतेन विलिप्तं त्रिरात्रम् ।
भवति हयलिङ्गसदृशं लिङ्गं कठिनाङ्गनादयितम् ॥

पूर्वं गोशकृता दृढोन्मालितं साधनं पश्चादेतेन द्रव्येण त्रिरात्रं लिप्तमुक्तरूपं भवति। केन द्रव्येण। मातुलरसेन श्लक्ष्णपिष्टेनाश्वगन्धाकन्देन मिश्रितं महिषीनवनीतमुद्बीजस्य हरदयिताफलस्यान्तर्निहितमहोरात्रमेकं पर्युषितं कृत्वानेनेति युगलकम् ॥ ४७, ४८ ॥

**धवळकणवीरकिसळअछेउब्भवबहळसळिळसंपुण्णं ।**
**णअणजुअं णीरुज्जइ सहसच्चिअ तक्खणुक्कुविअं ॥ ४९ ॥**

धवलकणवीरकिसलयच्छेदोद्भवबहलसलिलसम्पूर्णम् ।
नयनयुगं नीरुजीभवति सहसैव तत्क्षणोत्कुपितम् ॥

श्वेतहयमारबालपल्लवत्रोटनादुद्भवो यस्य तादृशेन बहुना जलेन तद्रसेनेत्यर्थः। सम्पूर्णं भरितं तत्कालं विकृतं नेत्रयुग्मं तत्क्षणमेव विगतव्यथं भवति ॥ ४९ ॥

**मोरअमूळं तम्ममअभाअणे थोअसिन्धवोम्मीसं ।**
**मन्थणिहित्तं भरणेण हरइ णवळोअणुक्कोवं ॥ ५० ॥**

**मयूरकमूलं ताम्रमयभाजने स्तोकसैन्धवोन्मिश्रम् ।**
**मस्तुनिघृष्टं भरणेन हरति नवलोचनोत्कोपम् ॥**

अपामार्गमूलं ताम्रभाण्डे ईषत्सैन्धवयुक्तं दधिमण्डेन निघृष्टं कृत्वा तेन पूरितयोर्नेत्रयोस्तरुणो विकारस्तत्कालमेव शाम्यतीति ॥ ५० ॥

**कण्णणिविट्ठासहदेविमूळिआ हरइ ळोअणुक्कोवं ।**
**भरणे (अ?)ण सिग्गुपळ्ळवरसो व्व महुणा समुम्मि-**
**[स्सो ॥ ५१ ॥**

**कर्णनिविष्टसहदेवीमूलिका हरति लोचनोत्कोपम् ।**
**भरणेन शिग्रुपल्लवरसो वा मधुना समुन्मिश्रः ॥**

सहदेव्या दण्डोत्पलाया मूलं श्रोत्रपालीभूतं तत्क्षणात् कुपितयोर्नेत्रयोर्विकारं संशमयति । अथ सौभाञ्जनकिसलयस्यन्दो माक्षिकसहितो नेत्रपूरणेन पूर्वोक्तं कार्यं करोतीति ॥ ५१ ॥

**अणुदिअसं गोसे ळोअणाइ जो धुवइ तीणि वाराओ ।**
**विमळजळभरिअवअणो सो मुचइ णअणरोएहि ॥ ५२ ॥**

**अनुदिवसं प्रभाते लोचने यो धावति त्रीन् वारान् ।**
**विमलजलभरितवदनः स मुच्यते नयनरोगैः ॥**

सुप्रभाते शिशिरनिर्मलस्वादुजलपूरितास्यः अञ्जलित्रयैः प्रतिदिवसं लोचने प्रक्षालयन् सर्वनेत्ररोगैः न कदाचिद् बाध्यते । स्वस्थवृत्तस्य च नित्याभ्यासार्थमयं प्रयोगो न तु विकृतनेत्रस्य इति ॥ ५२ ॥

**हरइ तुरंगमजळघट्टमसिणकरवाळिआजडा णीळिं ।**
**अञ्जणजुत्तीए णरा(ण) णीअमेत्तिव्व माहप्पं ॥ ५३ ॥**

**हरति तुरङ्गमजलघृष्टमसृणकारवल्लीजटा नीलिकाम् ।**
**अञ्जनयुक्त्या नराणां नीचमैत्रीव माहात्म्यम् ॥**

अश्वप्रस्रवेण सूक्ष्मपिष्टा कारवल्ल्याख्या या ओषधी निष्पर्याया या, (?) तस्या यन्मूलम् अञ्जनयोगेनोपयुक्तं नीलिकां पटलाख्यं नेत्ररोगं हरति । अन्धनीलिकाशब्दोऽपि पटलपर्याय । यथा निकृष्टेन सह सौहार्दं गुणगरिमाणमिति ॥ ५३ ॥

**पसुसलिळगाढभाविअसुमसिणसुरदारुरअभरिज्जन्तं ।**
**विळ्ळोमूळिअपम्हं वि पम्हळं होइ णअणजुअं ॥ ५४ ॥**

**पशु(पति ?)सलिलगाढभावितमसृणसुरदारुरजोभ्रियमाणम् ।**
**(वैमल्यो ?पिल्लो)न्मूलितपक्ष्मा(पि) पक्ष्मलं भवति (नयनयुगम्) ॥**

छागमूत्रेण पुन.पुनर्दत्तभावनं सुसूक्ष्मं यद्देवदारुकाष्ठचूर्णं तेन पूर्यमाणं लोचनयुगलं चिरकालपिल्लत्वात् पतितपत्रमपि पुनर्जातैः पत्रैः शोभितं भवतीति ॥ ५४ ॥

**गअणजळपिट्ठपिप्पळिकअअवआमळअ(अ)रअणिणि-**
**[म्मिआ ।**
**वत्ती क्खवपअइ णीसे(स)णअणरोए पउज्जन्ती ॥ ५५ ॥**

**गगनजलपिष्टपिप्पलिकतकत्वचामलय(ज)रजनिनिर्मिता ।**
**वर्तिः क्षपयति निश्शेषनयनरोगान् प्रयुज्यमाना ॥**

अवश्यायपानीयेन चूर्णीकृतया मागधिकया तथा कतकस्याच्छस्य फलेन तथोग्रगन्धया तथा रक्तचन्दनेन तथा पिण्डहरिद्रयेत्येतैः समभागैः सम्पादिता वर्तिः सर्वनेत्रामयानुपयुक्ता (भव ? ह)न्तीति ॥ ५५ ॥

**तरुसण्ठिअणहाणिब्भिण्णपरिणआमळअसालि(ळ ? ळेण) ।**
**भरिआण ळोअणाण संमासक्कन्ति णीसेसदुःखाइं ॥ ५६ ॥**

**तरुसंस्थितनखनिर्भिन्नपरिणतामलकसलि(ल ? लेन) ।**
**भरितयोः (लोचनयोः) संसर्पन्ति निश्शेषदुःखानि ॥**

झटिति वृक्षस्थितस्यैव कर(ज)विदारितस्य सुपक्वस्य धात्रीफलस्य रसेन पूरितयोर्नेत्रयोः सर्वरुजोऽपसर्पन्तीति ॥ ५६ ॥

**सिअतरुणमूळपळ्ळवसाहिअपसुदुद्धसेअजुत्तीए ।**
**ओसरइ पवणसूळं णअणाण मुहुत्तमत्तेण ॥ ५७ ॥**

**सिततरुणमूलपल्लवसाधितपशुदुग्धसेकयुक्त्या ।**
**अपसर(न्ति ? ति) पवनशूलं नयनयोर्मुहूर्तमात्रेण ॥**

सितपुष्पोपलक्षितं यत् तरुणमेरण्डं तस्य मूलं पत्राणि च तैः क्वथितं यदजाक्षीरं तत्सेकयुक्त्या अभ्युक्षणप्रयोगेण नेत्रयोर्वायुजं शूलमल्पेन कालेन

शाम्यति । क्षीरस्य साधनयुक्तिः —एरण्डमूलत्रयोः पलं पानीयपलैः षोडशभिः काथयित्वा चतुर्भागशेषं पानीयं कृत्वा तत्र क्षीरपलानि चत्वारि मिश्रीकृत्य पुनः काथयित्वा क्षीरपलान्येव चत्वारि ग्राह्याणीति ॥ ५७ ॥

**कमपरिवड्ढिअचन्दणसिन्धवपत्थापळासखइरेहि ।**
**अञ्जणमिणमो पडळन्धकुसुमणीलिहरं भणिअं ॥ ५८ ॥**

क्रमपरिवर्धितचन्दनसैन्धवपथ्यापलाशनिर्यासैः ।
अञ्जनमिदं पटलान्धकुसुमनीलिहरं भणितम् ॥

उत्तरोत्तरभागवृद्ध्या चन्दनादिभिः साधितमञ्जनं पटलादीन् नेत्ररोगान् नाशयतीति सम्बन्धः । तत्र रक्तचन्दनं श्वेतमेव लवणं हरीतकी किंशुकनिर्यास इत्येतैरेकैकांशवृद्ध्या श्लक्ष्णचूर्णितैरुक्तफलसिद्धिः पटलादिः पुष्पितादिः । शेषौ प्रसिद्धाविति ॥ ५८ ॥

**वासाहुसेअगिरिअण्णिआण मूळाइ जवसणाहाइं ।**
**जळवट्टिआइ णोळेन्ति फुल्लअं लोअणगआइ ॥ ५९ ॥**

वर्षाभूश्वेतगिरिकर्णिकयोर्मूलानि यवसनाथानि ।
जलवर्तितानि लुडन्ति पुष्पकं लोचनगतानि ॥

वर्षाभूः पुनर्नवा श्वेतगिरिकर्णिका शुक्लकटभी तयोर्मूले सूक्ष्मयवचूर्णयुक्ते सलिलपिष्टे नेत्रन्यस्ते पुष्पाख्यं तद्रोगं निवारयति । एकैकमनयोः कार्यकरणमिति ॥ ५९ ॥

**किंसुअरसभाविअकरञ्जतरुबीअविरइआ वत्ती**
**चिरजाअं वि पउत्ता फुल्लअमइरा समुप्पसइ ॥ ६० ॥**

किंशुकरस(परि ?)भावितकरञ्जतरुबीजविरचिता वर्तिः ।
चिरजातमपि प्रयुक्ता पुष्पकमचिरात् समुत्पुंसयति ॥

पलाशनिर्यासेन मिश्रितं यत् करञ्जबीजं करञ्जस्य नक्तमालस्य बीजानां चूर्णं तन्निर्मिता वर्तिः बहुकालोत्पन्नमपि पुष्पाख्यं नेत्ररोगं शीघ्रमञ्जनेनापसारयति ॥ ६० ॥

**थण्णेण मसिणपत्थरघट्टाइ विभीअअस्स मज्जाए ।**
**णासइ फुल्लअमइरा णिसामुहे अञ्जिअच्छस्स ॥ ६१ ॥**

स्तन्येन मसृणप्रस्तरघृष्टया विभीतकस्य मज्जया ।
नश्यति पुष्पमचिरान्निशामुखे अञ्जिताक्षस्य ॥

स्त्रीक्षीरेण सुश्लक्ष्णदृढपाषाणपिष्टो यः कलितरुफलस्य मज्जासारस्तेन दत्ताञ्जननेत्रस्य पुष्पाख्यरोगो नश्यतीति ॥ ६१ ॥

**महुमीसिअकण्णमळञ्जिएहि णासइ जणस्स णअणेहि ।**
**णत्तन्धं कडुआळअमसिणमसिअञ्जणेण व जहिच्छं ॥६२॥**

मधुमिश्रितकर्णमलाञ्जिताभ्यां(नश्यति जनस्य नयनाभ्याम् ।)
नक्तान्ध्यं लघुमत्स्यमसृणमष्यञ्जनेन वा यथेच्छम् ॥

माक्षिकभाविनेन स्वश्रवणगूथेन दत्ताञ्जनाभ्यां नेत्राभ्यां रात्र्यन्धता निवर्तते । अथवा सूक्ष्ममत्स्यं पुटपाकदग्धं कृत्वा तत्कायजेन मषीचूर्णेन माक्षिकमिश्रेणैवाञ्जनात् । यथेच्छमिति पूर्वप्रयोगापेक्षया बोद्धव्यमिति ॥ ६२ ॥

**पसुसलिळघट्ठगुञ्जामूळञ्जिअळोअणस्स तिमिराइं ।**
**जळघट्ठजळहराञ्जिअणअणस्स व झत्ति णासन्ति ॥ ६३ ॥**

पशुसलिलघृष्टगुञ्जामूलाञ्जितलोचनस्य तिमिराणि ।
जलघृष्टजलधराञ्जितनयनस्य वा झटिति नश्यन्ति ॥

तिमिराख्या नानानिदा(ने ? ना)नेत्ररोगाः छागमूत्रपिष्टेन रक्तिकामूलेन दत्ताञ्जनस्य निवर्तन्ते । अथवा पानीयघृष्टेन मुस्तेन कृ(त्वा ? ता)ञ्जनस्य अचिरेणैव विनश्यन्तीति ॥ ६३ ॥

**तण्डुलधुअणसुवट्टिअपडगाळिअदोणफुल्लिमूळेण ।**
**विउडिज्जइ पडलं लोअणाण णासेइ दिण्णेण ॥ ६४ ॥**

तण्डुलधावनसुवर्तितपटगालितद्रोणपुष्पिकामूलेन ।
विहन्यते पटलं लोचनयोर्नस्ये दत्तेन ॥

द्रोणपुष्पिका कुसुम्भयोनिस्तन्मूलेन तण्डुलक्षालनजलसू(क्ष्मेण ? क्ष्म)पिष्टेन पटगालितेन वस्त्रपूतेन नस्यप्रयुक्तेन पटलाख्यो नेत्रव्याधिर्नश्यतीति ॥ ६४ ॥

**सुप्पाडणीळघट्टा अहवा कणएण रुप्पएणं व ।**
**णासइ अञ्जणगुळिआ गिरिणो काणच्छएणं व ॥ ६५ ॥**

शूर्पाटन्या घृष्टा अथवा कनकेन वा रूप्येण वा ।
नश्यत्यञ्जनगुळिका गिरेः काणाक्षकेण वा ॥

अञ्जनगुलिका अञ्जनपिटकाख्यो नेत्रव्याधिः । शूर्पस्य अटव्या भ्रान्तेन सुवर्णेन रूप्येण वा निघृष्टा सा विनश्यति अथवा पर्वतकटाख्यैर्निरीक्षणेनेति ॥ ६५ ॥

**अंकोल्लक्कजडाणं एक्कं ओहरइ कामळावाहिं ।**
**तण्डुळजळेण णावणमग्घाअं जालिणिफळं वा ॥ ६६ ॥**

**अङ्कोलार्कजटयोरेकं हरति कामिलाव्याधिम् ।**
**तण्डुलजलेन नावनमाघ्रातं जालिनीफलं वा ॥**

अङ्कोलस्य चिरिबिल्वस्य वृक्षस्य रूषकस्य ये जटे मूले तयोर्मध्यादेकं तण्डुलधावननिघृष्टं नस्येनोपयुक्तं कामिलां शमयति । अथवा जालिन्या जीमूतकाख्यस्य ओषधिविशेषस्य सम्बन्धि फलं मर्दयित्वाघ्रातं पूर्वोक्तं कार्यं करोतीति ॥ ६६ ॥

**जाळिणिफळपरिभाविअंबुणामणं हरइ कामळावाहिं ।**
**सिसिरजळमासिणवट्टिअकुमारिकन्देण व विइण्णं ॥ ६७ ॥**

**जालिनीफलपर्युषिताम्बुनावनं हरति कामिलाव्याधिम् ।**
**शिशिरजलमसृणवर्तितकुमारिकन्देन वा वितीर्णम् ॥**

देवताल्याः फलस्यान्तः पर्युषितं यज्जलं तेन दत्तं नस्यं कामिलारोगं शमयति । अथवा शीतजलसुसूक्ष्मपिष्टेन कुमार्या अफलायाः कर्कोट्या मूलेन दत्तं नस्यमुक्तफलं करोतीति ॥ ६७ ॥

**ओसरइ दोणफुळ्ळीरसरञ्जिअळोअणारविन्दस्स ।**
**हिङ्गुविहिअञ्जणस्स व दारुणमवि कामिळादुःखं ॥ ६८ ॥**

**अपसरति द्रोणपुष्पिकारसरञ्जितलोचनारविन्दस्य ।**
**हिङ्गुविहिताञ्जनस्य वा दारुणमपि कामिलादुःखम् ॥**

द्रोणपुष्पिकारसेन दत्ताञ्जननेत्रस्य अथवा रामठेनाञ्जिताक्षस्य तीव्रापि कामिलावेदनापसरतीति ॥ ६८ ॥

**पञ्चोळत्तअडाडिमपसूअदुव्वारसो णिवारेइ ।**
**णाराविहिणा खुंखुणअसोणिअ सइपअट्टं पि ॥ ६९ ॥**

पथ्यालक्तकडाडिमप्रसूनदूर्वारसो निवारयति ।

............................ ... .........

तत्रायं विशेषः । डाडिमपुष्पदूर्वारस वेकैकं नस्येन प्रयुक्तावुक्तकार्यकरौ । हरीतकीलाक्षारसावित्येकम् । गताभ्यां द्वाभ्यां रसाभ्यां सहितौ कार्यकरौ । चत्वार्यपि द्रव्याणि सहसा प्रयुक्तान्युक्तकार्यकराणीति ॥ ६९ ॥

**परिवसिअसलिलवट्टिअकडुहुम्बकन्दणासेण ।**
**णासरिणाउ णासं पच्चन्ति कअं व अउलीण ॥ ७० ॥**

पर्युषितसलिलवर्तितकडु(हु)म्बीकन्दनस्येन ।
नासार्शांसि नाशं व्रजन्ति कृतमिवाकुलीनेन ॥

अहोरात्रस्थापितेन जलेन पिष्टं यत् परिपक्वायाः कडुहुम्ब्या निष्पर्याया (या) मूलेन नस्योपयुक्तेन घ्राणविवरोत्पन्ना अनामिका नश्यन्ति उपकारो दुर्जन इवेति । फलाविसंवादनार्थमुपमानामिति ॥ ७० ॥

**मञ्जिट्ठातुत्थअकमलसालिजीवन्तिदारुरअणीहि ।**
**सिद्धं सदुद्धमहरोपसग्गविणिवारणं मअणं ॥ ७१ ॥**

मञ्जिष्ठातुत्थककमलशालिजीवन्तीदारुरजनीभिः ।
सिद्धं सदुग्धमधरोपसर्ग(वि)निवारणं मदनम् ॥

मदनं सिक्थकं दुग्धेन सह मञ्जिष्ठया मित्रवल्या तथा तुत्थकेन मयूरग्रीवेण किटिभाख्येन कार्परिकेनामृतासञ्ज्ञेन वा तथा कमलशालिना तथा जीवन्त्या जीवनीयया तथा दारुहरिद्रया एतैश्चूर्णितैः समांशैः सम्पन्नमोष्ठस्फुटनादिदोषनिवारणम् । साधनं त्वस्य क्षीरं क्वाथयित्वा तन्मध्ये सिक्थकं गालयित्वा मञ्जिष्ठादिचूर्णकं क्षिप्त्वा तेनाधरावुपलिम्पेदिति ॥ ७१ ॥

**सज्जरसकणअगेरिअफाणिअघअतेल्लसेन्धुसञ्जुत्तं ।**
**सिद्धं सित्थअमहरफ्फुडिओच्छडिआइवणहरणं ॥ ७२ ॥**

सर्जरसकनकगैरिकफाणितघृततैलसैन्धवैर्युक्तम् ।
सिद्धं सिक्थकमधरस्फुटितोच्छटितव्रणशमनम् ॥

मदनं सिद्धं सिक्थकं गालितं सदुक्तं कार्यं करोतीति । कथं गालितं गलया सुवर्णगैरिकेण तथा गुडक्वाथकल्केन फाणिताख्येन तथा गव्यघृततैलाभ्यां लवणेन च संयुक्तम् । अयं तु विशेषः । प्रथमं घृततैले क्वाथयित्वा-

रालादिचूर्णं क्षिपेत् तेन लिप्तयोरोष्ठयोः पिष्टादिवशात् स्फुटितयोस्तथा तच्चटि-तयोरुद्गतत्वचोर्यानि क्षतानि तानि नश्यन्तीति ॥ ७२ ॥

**तण्डुळजळेण पिट्ठं काअंबरिआइ मूळमइमसिणं।**
**पीअं वअणपअट्टं खणेण रुहिरं विणासेइ ॥ ७३ ॥**

**तण्डुलजलेन पिष्टं काकोदुम्बरिकाया मूलमतिमसृणम्।**
**पीतं वदनप्रवृत्तं क्षणेन रुधिरं विनाशयति ॥**

काकोदुम्बरिका फल्लुः तन्मूलं तण्डुलधावनजलेन पिष्टं पीतं सन्मुख-प्रवृत्तं दन्तस्रावादि रक्तं शमयतीति ॥ ७३ ॥

**चव्विअधरिएहि मुहे णासइ जाईदळेहि मुहरोओ।**
**केसरबीएहि पुणो चळिआ दन्ता थिरा होन्ति ॥ ७४ ॥**

**चर्वितधृतैर्मुखे(न?) नश्यति जातीदलैर्मुखरोगः।**
**केसरबीजैः पुनश्चलिता दन्ता स्थिरा भवन्ति ॥**

सुमनःपल्लवैः पूर्वं चर्वितैस्ततः आस्याभ्यन्तरे धृतैः आस्यरोगो निव-र्तते। वकुलपुष्पफलस्य बीजैः पूर्ववत् कृतैः शिथिलाः सन्तो दशना बद्धमूला भवन्तीति ॥ ७४ ॥

**घणकुट्ठेळाधणिअअळाट्ठिमहुएळावाळुआकवळो।**
**वअणाइ पूइगन्धं हरइ सुराळसुणगन्धञ्च ॥ ७५ ॥**

**घनकुष्ठैलाधान्यकयष्टिमध्वेलावालुककबलः।**
**वदनात् पूतिगन्धं हरति सुरालशुनगन्धं च ॥**

मुस्ताकुष्ठतुटिधान्यकफलैस्तथैलावालुकेन हरिवालुकेन च एतैः कृतः कबलः आस्यान्तरसञ्चार्यमाणद्रव्यापीड आस्यात् सहजदुर्ग(न्ध? न्धि)त्वं तथा पीतस्य सुरादेरासवस्य तथा भुक्तस्य लशुनादेः कर्कटगन्धस्य द्रव्यस्य सम्ब-न्धिनः दुरामोदमपसारयतीति ॥ ७५ ॥

**तंबाजळगाढुक्काढिआओ मसिचिहुरकुट्ठमिलिआओ।**
**णासन्ति वअणदोसं सेविज्जन्तीओ पच्छाओ ॥ ७६ ॥**

**ताम्राजलगाढोत्क्वाथिता मिशिचिहुरकुष्ठमिलिताः।**
**नाशयन्ति वदनदोषं सेव्यमानाः पथ्याः ॥**

हरीतक्योऽभ्यासेनोपयुज्यमाना दौर्गन्ध्याद्यास्यदोषं निवारयन्ति । कीदृश्यः प्रथमं गोमूत्रेण गाढं घनत्वापत्तिपर्यन्तं कृतक्वाथाः पश्चात् शतपुष्पावालुकबाष्पचूर्णेन मिश्रिताः सत्यः उपयुक्ता इति ॥ ७६ ॥

**जाईफळकोसकुवळअवरंगमरुवअविणिम्मआ हरइ ।**
**घोरं(वि)पूइगन्धं मुहविवरपरिट्ठिआ गुळिआ ॥ ७७ ॥**

जातीफलकोशकुवलयवराङ्गमरुवकविनिर्मिता हरति ।
घोरमपि(हरति ?)पूतिगन्धं मुखविवरपरिष्ठिता गुलिका ॥

एतैर्द्रव्यैः सम्पादिता गुलिकास्यकुहरस्था दुर्निवारमपि तद्दुर्गन्धमपोहति । कैर्द्रव्यैर्निर्मिता जातीफलं प्रसिद्धम्, तस्य मज्जा, तथा कोशो जातिपत्रिका कुवलयं कुष्ठं, वराङ्गं त्वक्, मरुवकम् फणिज्जकम् इत्येतैः समांशैर्जलवर्तितैरिति । यत्र गुलिकावलेहत्वाद्यापादनया विशिष्टद्रवद्रव्यं नोक्तं तत्र सामान्यमेव पानीयं ग्राह्यमिति सर्वत्र सिद्धिः ॥ ७७ ॥

**विळडेइ पूइगन्धं मुहरोअं हरइ खयमणुदिअहं ।**
**दन्तहणन्तेल्लजुअं कडुअन्तित्तं कसाअं व ॥ ७८ ॥**

विघटयति पूतिगन्धं मुखरोगं हरति क्षयमनुदिवसम् ।
दन्तधावनं तैलयुतं कटु(कं) तिक्तं कषायश्च ॥

दन्तकाष्ठं कटुतिक्तकषायाणां रसानामन्यतमरसयुक्तं तैलसिक्ताग्रं नित्यमभ्यस्यमानमास्यदौर्गन्ध्यं तद्बाह्यभ्यन्तराणि च शमयतीति ॥ ७८ ॥

**तंबोळतिव्वचुण्णअअन्तोडड्ढे मुहम्मि गण्डूसो ।**
**तेळ्ळेण काञ्जिएण व धरिओ वेअणं विणासेइ ॥ ७९ ॥**

ताम्बूलतीव्रचूर्णकान्तर्दग्धे मुखे गण्डूषः ।
तैलेन काञ्जिकेन वा धृतो वेदनां विनाशयति ॥

अतिखरेण ताम्बूलचूर्णरागेण दग्धस्यास्यस्य या व्यथा भवति तैलेनारनालेन वा कृतो गण्डूषस्तां शमयतीति ॥ ७९ ॥

**जाइदळेळापिप्पाळिळाआमहुमाउळुंगदळळेहो ।**
**किण्णरसममहुरसरं कुणइ णरं सइ पउज्जन्तो ॥ ८० ॥**

जातिदलैलापिप्पलिलाजामधुमातुलुङ्गदललेहः ।
किन्नरसममधुरस्वरं करोति नरं सदा प्रयुज्यमानः ॥

एतैर्द्रव्यैः कृतो लेहोऽवलेह्यद्रव्यं नित्यं प्राग्भक्तगमनेनाभ्यस्यमानं कि-म्पुरुषतुल्यश्राव्यध्वनिं पुरुषं करोति । कैर्द्रव्यैः कृतो तुव्या तथा मागधिकया (जातीदलैः) लाजैस्तथा माक्षिकेण तथा मातुलुङ्गवृक्षस्य पत्रैः तत्र माक्षिकमव-लेहस्य द्रवद्रव्यमिति ॥ ८० ॥

**सेहालिआजडाचव्वणेण गळसुण्ठ(आ)समो सरइ ।**
**उवजंभिआवि णासाविवरसिरासोणिए गळिए ॥ ८१ ॥**

शेफालिकया स्ताम्रवत्त।ख्यो व्याधिर्निवर्तते यो शिरव्याध्यादियुक्तस्य नासिकापातिसिरामार्गेण रक्ते विगलिते सतीति(?) ॥ ८१ ॥

**सुरतरुबीअसगब्भं हअळदिट्ठिरसेण साधिअन्तेळं ।**
**गळरोअसीसपिअणाओ णावणविहिणो विणासेइ ॥ ८२ ॥**

**सुरतरुबीजसगर्भं हयशकृद्रसेन साधितं तैलम् ।**
**गलरोगशीर्षवेदना नस्यविधिना शमयति ॥**

तैलमेतन्नस्येनोपयु(क्तमु)क्तं कार्यं करोति । कीदृशम् अश्वशकृद्रसेन स्वरसयुक्त्या गर्भीकृतं तदेव दारुफलान्तर्वर्तितसारेण सिद्धं पक्वमिति ॥ ८२ ॥

**गुञ्जावराहकण्णीण मूळमेक्कक्कमं समुप्पसइ ।**
**चव्विअदन्तक्कन्तं घुणदन्तअवेअणादुःखं ॥ ८३ ॥**

**गुञ्जावराहकर्ण्योर्मूलमेकैकमुत्पुंसयति ।**
**चर्वितदशनाक्रान्तं घुणदन्तवेदनादुःखम् ॥**

रक्तिकायास्तथा वराहकर्ण्यां मूषिककर्ण्यां एकतरस्या मूलं चर्वितं सत् सरुजा दशनेनाक्रान्तं सत् तत्रैकं धृतमित्यर्थः । तादृशं सद् घुणदन्तव्याधिवि-शेषस्य सम्बन्धिनीं व्यथामपसारयतीति । अन्तर्गतकृमिदन्तो यत्र घुणदन्त-काख्यो व्याधिरिति ॥ ८३ ॥

**णिहुडुंगिणीळीजंघादुद्धिआमूळिआण एक्काए ।**
**दसणक्कन्ताए किमीणि पडइ दसणुब्भवो णिउणं ॥ ८४ ॥**

**णिहुडुङ्गिनीलीजङ्घादुग्धिकामूलिकानामेकैकया ।**
**दशनाक्रान्तया कृमिणः पतन्ति दशनोद्भवा निपुणम् ॥**

सुधावृक्षस्य तथा नीलया नीलिन्यास्तथा जङ्घायास्तथा दुग्धिकाया अर्कपुष्पिकाया अलालिकामूलानि सामान्यतमया सरुजा दशनेनाक्रान्तया(व)द्रव्यया दन्तजा कृमिर्निश्शेषं निपततीति ॥ ८४ ॥

**अंगुट्ठअ णहलेवो कीरइ फलिए जम्म पासम्मि ।**
**तत्तो आवरादिगुब्भवघुणदन्तअ कीडओ पडइ ॥ ८५ ॥**

**अङ्गुष्ठे नखलेपः क्रियते फलिन्या यस्मिन् पार्श्वे ।**
**ततोऽपरदिगुद्भवघुणदन्तात् कीटकः पतति ॥**

फलिन्या लाङ्गलिकया जलपिष्टया चरणाङ्गुष्ठे यस्मिन् दक्षिणे वामे लेपः क्रियते तत्कल्पनया तदन्यदिग्भागघुणदन्तकाख्यव्याधिजः कृमिर्निपततीति ॥ ८५ ॥

**दुद्धोम्मीसिअकक्कडअचळणपरि(पक्क)घअकअब्भंगा ।**
**णहु कडअन्ति दन्ता केवळतच्चळणळित्तं व ॥ ८६ ॥**

**दुग्धोन्मिश्रितकर्कटकचरणपरिपक्वघृतकृताभ्यङ्गाः ।**
**न खलु कटकटायन्ते दन्ताः केवलतच्चरणलिप्ता वा ॥**

कर्कटकस्य कुरुबिल्वाख्यस्य मत्स्यविशेषस्य पादास्ते गोक्षीरेण पानीयस्थाने प्रयुक्तेन पश्चात् सिद्धं यद् घृतं तेन कृताभ्यङ्गाद् बालादेर्दन्ताः कटकटाशब्दं न कुर्वन्ति । अथवा कर्कटकस्य पादैः परिपिष्टैर्लिप्तास्सन्तस्तथा (न) कुर्वन्ति ॥ ८६ ॥

**णासन्ति तक्खणाहअससलोणिअळेविआइ वंगाइ ।**
**सजळाए व जाईफळबाहिच्छळ्ळीए ळित्ताइ ॥ ८७ ॥**

**नश्यन्ति तत्क्षणाहतशशशोणितलिप्तानि व्यङ्गानि ।**
**सजलया वा जातीफलबाह्यत्वचा लिप्तानि ॥**

व्यङ्गानि मुखवैवर्ण्यकारीणि प्रसृतरूपाणि श्यामानि मण्डलानि त्वग्विकारस्थानि तत्क्षणव्यापादितशशरुधिराभ्यक्तानि निवर्तन्ते । यदि वा पानीयपिष्टया जातीफलस्याण्डपरिहारेण बाह्यत्वचा केवलया लिप्तानि निवर्तन्त इति ॥ ८७ ॥

**इंगुइफळमज्जा सिसिरसळिळपिट्ठा निरत्तीमत्तेण ।**
**ळेवेण हरइ वंगं गंगासंगो व्व दुरिआइं ॥ ८८ ॥**

इङ्गुदीफलमज्जाशिशिरसलिलपिष्टस्त्रिरात्रमात्रेण ।
लेपेन हरति व्यङ्गं गङ्गासङ्ग इव दुरितानि ॥

इङ्गुदी पिल्वकः तत्फलसारस्य सलिलेन पिष्टस्य लेपेन व्यङ्गं निवारयति । कार्याविसंवादार्थमुपमानं स्पष्टमिति ॥ ८८ ॥

**कसणतिळकसणजीरअसिद्धत्थअजीरएहि मुहससिणो ।**
**दुद्धेण कओ ळेवो वंगकळंकं समुप्पसइ ॥ ८९ ॥**

**कृष्णतिलकृष्णजीरकसिद्धार्थकजीरकैर्मुखशशिनः ।**
**दुग्धेन कृतो लेपो व्यङ्गकलङ्कं समुत्पुंसयति ॥**

कृष्णातिलाः प्रसिद्धाः । कृष्णजीरकं कालोपकुञ्चिका । तथा गौरसर्षपाः तथा जीरकं सिताजाजी एतैः समांशैः पिष्टैर्गोक्षीरभावितैर्लेपो मुखचन्द्रव्यङ्गमपसारयति । चन्द्रस्य यथा कलङ्को दुर्भरस्तथैव यो मुखस्य व्यङ्गकलङ्कः तमप्ययं प्रयोगो हरतीत्युपमानप्रयोजनमिति ॥ ८९ ॥

**अवहरइ बोरमज्जा गुळमहुणवणीअसञ्जुआ वंगं ।**
**पसुदुद्धमसिणपिट्ठा वारुणिछल्लिव्व ळेवेण ॥ ९० ॥**

**अपहरति बदरमज्जा गुळ(मधु)नवनीतसंयु(तो ? ता) व्यङ्गम् ।**
**पशुदुग्धमसृणपिष्टा वारुणीत्वगिव लेपेन ॥**

बदर(स्य) कर्कन्धोरस्थिसारं गुळं तथा मधुनवनीतमिश्रितं व्यङ्गमपहरति । तथा छागक्षीरेण सूक्ष्मपिष्टा विशालात्वक् लेपेन पूर्वप्रयोगकार्यं करोतीति ॥ ९० ॥

**तुसरहिअमसिणजवरअसरिसवमहुळट्ठिळोद्धळेवेण ।**
**होन्ति मुहाइ विणिज्जिअचामीअर(चारु)सोहाइ ॥ ९१ ॥**

**तुषरहितमसृणयवरजस्सर्षपमधुयष्टिलोध्रलेपेन ।**
**भवन्ति मुखानि विनिर्जितचामीकरचारुशोभानि ॥**

निस्तुषीकृत्य पिष्टानामक्षतानां सूक्ष्मचूर्णेन तथा गौरसिद्धार्थैस्तथा मधुयष्ट्या तथा लोध्रेण शबरेण एतैरपि सूक्ष्मपिष्टैः पानीयभावितैः कृतले(पो ? पेन) मुखान्यतिगौराणि सर्वकलङ्कदोषरहितत्वाद् भवन्ति । चामीकरं सुवर्णमिति ॥ ९१ ॥

**परिणअवटपण्णसुवण्णछल्लिपंकअपिअंगुमहुएहि ।**
**मञ्जिट्ठाकाळेअअळक्खारुणळोद्धभाएहि ॥ ९२ ॥**

**जळवट्टिएहि ळेवो वअणाइ विळासिणीण सुहआइं ।**
**कुणइ विणिज्जिअसंपुण्णसरअससिबिंबसोहाइं ॥ ९३ ॥**

परिणतवटपर्णसुवर्णत्वक्पङ्कजप्रियङ्गुमधूकैः ।
मञ्जिष्ठाकालेयक(लाक्षारुण)लोध्रभागैः ॥

जलवर्तितैर्लेपो वदनानि विलासिनीनां सुभगानि ।
करोति विनिर्जितसंपूर्णशरच्छशिबिम्बशोभानि ॥

परिपक्वानां वटस्य न्यग्रोधवृक्षस्य पत्राणां तथा सुवर्णत्वगाख्या ओषध्यस्तथा पङ्कजस्य पद्मस्य तथा श्यामायास्तथा मधुयष्ट्यास्तथा चित्रवल्ल्यास्तथा कालेयकस्य पीतसारस्य तथा द्रुमव्याधेस्तथा कुङ्कुमस्य तथा शाबरस्यैतेषां समैर्भागैः पानीयपिष्टैः कृतेन लेपेन मुखान्यतिवर्णाढ्यानि भवन्तीत्युपमानार्थ इति । कालेयकस्यालाभे दारुहरिद्रा देयेति सर्वत्र योज्यम् । शिष्टं सुबोधम् । युगलकम् ॥ ९२, ९३ ॥

**जळफळिणिबोरमज्जाचन्दणकाळेअएहि सरिसेहि ।**
**वअणाइ कुणइ ळेवो कमळोअरकन्तिचोराइं ॥ ९४ ॥**

जलफलिनी(कोल ? बदर)मज्जाचन्दनकालेयकैः सदृशैः ।
वदनानि करोति लेपः कमलोदरकान्तिचोराणि ॥

वालप्रियङ्गुबदरफलसारमलयपीतसारैः समांशैः पानीयपिष्टैः कृतो लेपो मुखान्यपहृतपद्मकार्णि(का)कान्तीनि करोति ॥ ९४ ॥

**कुंकुमकाळेअअछ(ल्लि ? इ)पदुममुणाळेहिं मळअसहि-**
**[एहि ।**
**पत्तंगरोअणाबोरसार(स ? सा)माहिकुट्ठेहि ॥ ९५ ॥**
**वितुन्नसूरुणिसाजुअमहुअळोद्धेहि सळिळपिट्ठेहि ।**
**ळेवो करेइ वअणं ळहुइआमिअळञ्छणच्छाअं ॥ ९६ ॥**

(कुङ्कुमकालेयकच्छविपद्ममृणालैर्मलयसहितैः ।
पत्तङ्गरोचनाबदरसारश्यामाहिकुष्ठैः ॥

वितुषमसूरनिशाद्वयमधूकलोध्रैः सलिलपिष्टैः ।
लेपः करोति वदनं लघूकृतमृगलाञ्छनच्छायम् ॥)

एतैर्द्रव्यैर्लेपो मुखमतिशायितपूर्णशशिशोभं करोति । कैर्द्रव्यैः । काश्मीरकतृतीयचन्दनसुवर्णच्छविकलशोशीरचन्दनैर्गोरोचनाबदरास्थिसाराप्रियङ्गुनागकेसरवाप्यैस्तथा वितुषमसूरसूक्ष्मचूर्णहरिद्राद्वयमधुयष्टिशाबरैरित्येतैः समांशैर्जलपिष्टैरिति युगलकम् ॥ ९५,९६ ॥

**महुसारकंगुसरिसवपउम(अ)कालेअलोद्धरअणीहि ।**
**पइऊण घअं विहिणा सिचअञ्च(ल) गालिअं पच्छा**
**[॥ ९७॥**

**णिम्मलपवणुम्मीसं जलवट्टिअपउरकुङ्कुमसणाहं ।**
**सिसिरजलम्मि णिक्खित्तं मउआणलताविअं णिहुअं**
**[॥ ९८ ॥**

**वण्णअघएण इमिणा सिसिरे वि फुरन्तकन्तिसुहआइ ।**
**वअणाइ विला(स)वईण होन्ति तामरससोहाइ ॥ ९९ ॥**

मधुसार(कुङ्कुम ? कङ्गु)सर्षपपद्मककालेयकलोध्ररजनीभिः ।
पक्त्वा घृतं विधिना (सिचयाञ्चल)गालितं पश्चात् ॥
निर्मलपवनोन्मिश्रं जलवर्तिनप्रचुरकुङ्कुमसनाथम् ।
शिशिरजले निक्षिप्तं मृदुनलतापितं निभृतम् ॥
वर्णकघृतेनानेना शिशिरेऽपि स्फुरत्कान्तिसुभगानि ।
वदनानि विलासवतीनां भवन्ति तामरसशोभानि ॥

त्वगास्थिता(?) मधुयष्टि(:) (कुङ्कुम ? कङ्गु:)प्रियङ्गुस्तथा गौरसिद्धार्थः पद्मकं तथा कालेयकं पीतचन्दनं तथा शाबरं तथा पिण्डहारिद्रा(या?) इत्येतैः कल्कद्रव्यैः समांशैरक्तपानीयमात्रापकैर्घृतमुक्तमात्रं साधयित्वा कर्पटपूतं कृत्वा ततः निष्कलीकृत्य सिक्थके घृतपले कर्षं इति भावितं सत् श्रेष्ठकाश्मीरेण तदर्धपरिमाणेन सहितं कार्यम् । ततः शीतलपानीये निक्षिप्तं तत उद्धृतकाले अनुत्कटाग्निना शनैर्दीपितं कार्यमित्येवं साधितेनानेन वर्णकघृताभिधानेन घृतेन सुन्दरीणां मुखानि अभ्यक्तानि वैवर्ण्यकारिणि शिशिरकालेऽपि विलसद्दीप्तिसुन्दराणीति । युगलकम् (?) ॥ ९७—९९ ॥

कुङ्कु(म)महुअचन्दणमञ्जिट्ठातरुविआरकरिसेहि ।
तेळ्ळकुडुवं विपक्कं [illegible]उणिअपसुदुद्धसञ्जुत्तं ॥ १०० ॥

पळितिळअवंगरहिआइ मासळलावण्णगण्डसुहआइं ।
कुणइ समब्भंगेण सत्ताहा कामिणिमुहाइं ॥ १०१ ॥

कुङ्कुममधूकचन्दनमञ्जिष्ठातरुविकारकर्षैः ।
तैलकुडुवं विपक्कं द्विगुणितपशुदुग्धसंयुक्तम् ॥

पलितिलकव्यङ्गरहितानि मांसललावण्यगण्डसुभगानि ।
करोति समभ्यङ्गेन सप्ताहात् कामिनीमुखानि ॥

अरुणेन तथा मधुयष्ट्या तथा चन्दनेन तथा मञ्जिष्ठया अरुणया तथा तरुविकारेण लाक्षया एतैः प्रत्येकं कर्षपरिमाणैस्तैलपलाष्टकद्विगुणच्छागक्षीरसहितं विपक्कं साधितं सत् सप्ताहात् सम्यगभ्यङ्गप्रयोगेण विलासिनीनां वदनानि त्वक्संकोचेन तथा कृष्णैर्बिन्दुभिस्तथा भृङ्गैर्मुखत्वग्वैवर्ण्यरूपैर्मण्डलैः रहितानि परिपूर्णगौरकपोलसुभगानि करोतीति युगलकम् ॥ १००, १०१ ॥

कळधोअमसिणवट्टिअटंकणकोविअकअकमळगब्भं ।
तंबादुद्धेण चउग्गुणेण मन्दाणळे सिद्धं ॥ १०२ ॥

जुत्तीइ विमळसित्थअसञ्जोइअथोअकुंकुमउम्मिस्सं ।
अइकुणइ वअणसोहं तेळ्ळं सिसिरम्मि सविसेसं ॥१०३॥

कलधौतमसृणवर्ति(त)टङ्कणकोपितकमलकृतगर्भम् ।
ताम्रादुग्धेन चतुर्गुणेन मन्दानले सिद्धम् ॥

युक्त्या विमलसित्थकसंयोजितस्तोककुङ्कुमोन्मिश्रम् ।
अतिकरोति वदनशोभां तैलं शिशिरेऽपि सविशेषम् ॥

एतत्तैलमुक्तक्रमेण मृद्वग्नौ सिद्धं सच्छिशिरकाले वातप्रधानेऽपि मुखाभ्यङ्गेन प्रयुक्तं वधूनां वदनमेकविंशतिदिनाभ्यासादतिसुन्दराभं करोति । कीदृशम् । कमलं ताम्रं तच्चूर्णं गर्भे यस्य । कीदृक्चूर्णं प्रथमटङ्कणेन सुवर्णम् । एवंविधं ताम्रचूर्णगर्भं तत्तैलं चूर्णचतुर्गुणपरिमाणं तच्चतुर्गुणगोक्षीरसंयुक्तं युगपच्च मुखं (?) ततो युक्त्या वैदग्ध्येन विमिश्रीकृतं यन्मधूच्छिष्टं तैलपलमेकत्वमात्रपरिमाणमष्टभागमात्रकुङ्कुमसंयुक्तं तेन तैलमिश्रं सं(यु ? यो)ज्यमिति युगलकम् ॥ १०२, १०३ ॥

**अवहरइ गण्डमाळं सुरहीसलिलेण सञ्जुअं पीअं ।**
**गिरिकण्णिआपुरन्दरवारुणिमू(ळमे ? ळेसु ए)क्कक्कं ॥१०४॥**

अपहरति गण्डमालां सुरभिसलिलेन संयुतं पीतम् ।
गिरिकर्णिकापुरन्दरवारुणीमूलयोरेकैकम् ॥

श्वेतस्पन्दायास्तथा पुरन्दरवारुण्या विशालायाश्च सम्बन्धिनोर्मूलयोरेकतमं गोमूत्रेण पिष्ट्वा पीतं सन्मालारूपां गण्डमुपचीति प्रसिद्धां नाशयतीति ॥ १०४ ॥

**सरिसेहि जवाकुसुमक्कदुद्धतिळतेल्लजावअरसेहि ।**
**णासेइ गण्डमाळां लेवो कोवं पणामो व्व ॥ १०५ ॥**

सद्द(जै ? क्षै)जपाकुसुमार्कदुग्धतिलतैलयावकरसैः ।
नाशयति गण्डमालां लेपः कोपं प्रणाम इव ॥

तुल्यमात्रैर्जपाकुसुमस्य जापकाख्यया लोके प्रसिद्धस्य पुष्पस्य रसेन तथार्कवृक्षस्य क्षीरेण तथा तिलतैलेन तथा लाक्षारसेनेत्येतैर्मिश्रितैः कृतो लेपः पूर्वोक्तं कार्यं करोतीति । उपमानं फलाविसंवादार्थमिति ॥ १०५ ॥

**विउडेइ गण्डमाळं (दवि ? गहि)अं पूसम्मि कन्धराबद्धं ।**
**पीअं व घउम्मीसं सिअपव्वअकण्णिआमूळं ॥ १०६ ॥**

विघटयति गण्डमालां गृहीतं पुष्ये कन्धराबद्धम् ।
पीतं वा घृतोन्मिश्रं सितपर्वतकर्णिकामूलम् ॥

श्वेतगिरिकर्णिकामूलं तिष्यर्क्षगृहीतं व्याधितस्य ग्रीवाग्रथितं पूर्वोक्तं व्याधिं नाशयति । अथवा तदेव गोघृतेन सहावलीढमुक्तं कार्यं करोतीति ॥ १०६ ॥

**चुच्छुन्दरिसाहिअतेल्लतुप्पिआ दारुणा वि वेएण ।**
**परिहरइ गण्डमाळा धणरहिअं धुत्तगोट्टि व्व ॥ १०७ ॥**

चुच्छुन्दरीसाधिततैलाभ्यक्ता दारुणापि वेगेन ।
परिहरति गण्डमाला धनरहितं धूर्तकुट्टिनीव ॥

चुच्छुन्दरी गन्धमूषिका तया पक्वं यत् तैलं तेनाभ्यक्ता सती गण्डमाला रो(गं न ? गिणं) वेगेन शीघ्रमेव घोरापि परित्यजति । न तं बाधत इत्यर्थः । उपमानं गाथापूरणार्थमेवेति । अत्र साधनयुक्ति(:) शुद्धाम्बुयुक्त्या ॥ १०७॥

**(जं ? जो) खाअइ वेळ्ळतळ्ळं पिबइ कसाअं व्व सेळुरुक्खस्स ।**
**फुटिआ वि गण्डमाळा तस्स फुडं णिव्वणा होइ ॥१०८॥**

**(यत् ? यः) खादति पल्लवतैलं पिबति कषायं वा शेलुवृक्षस्य ।**
**स्फुटितापि गण्डमाला तस्य स्फुटं निर्व्रणा भवति ॥**

पल्लव इति देशान्तरप्रसिद्धसंज्ञो निष्पावाख्यः शिम्बधान्यविशेषः । तं तैलेन सह योऽश्नाति तस्य भग्नापि गण्डमाला रोहति । निवृत्तव्याधिरसौ भवतीत्यर्थः । अथवा श्लेष्मातकतरोः कषायं क्वाथं यः पिबति तस्यापि पूर्वोक्तफलसंपत्तिरिति ॥ १०८ ॥

**कइकच्छुमूळमीसिअजिंगिणिनिरुसरससीसअजळेहि ।**
**णावणमवबाहुअकण्ठकन्धरारोअ(वि ? णि)द्दळणं ॥ १०९॥**

**कपिकच्छूमूलमिश्रितजिङ्गिणीतरुस्वरसशीतलजलैः ।**
**नावनमपबाहुककण्ठकन्धरारोगनिर्दलनम् ॥**

कपिकच्छ्वा आत्मगुप्ताया मूलं तथा जिङ्गिण्याश्च तथा मौचक्या निर्यासः तथा शीतोदकमेतैः कृतं नस्यमपबाहुकस्य बाहुशूलस्तम्भादिलक्षणस्य बाहुव्या(धिं ? धेः) तथा गलगण्डव्याधीनां विनाश(न)मिति । नस्यविधिरत्रायुर्वेदोक्तः ॥ १०९॥

**जिङ्गिणीरसोडुम्बरदुद्धहिङ्गुकपिकच्छुमूळणासेण ।**
**अवबाहुअरोओ रुसिओ व्व दूरं समोसरइ ॥ ११० ॥**

**जिङ्गिणीनिर्यासोदुम्बरदुग्धहिङ्गुकपिकच्छूमूलनस्येन ।**
**अपबाहुकरोगो रुषित इव दूरं समपसरति ॥**

जिङ्गिणीनिर्यासेन तथा उदुम्बरस्य वृक्षस्य कृमिफलाख्यस्य क्षीरेण तथा बाह्लिकेन कपिकच्छ्वा आत्मगुप्ताया मूलेनैतैः कृतेन नस्येन हेतुना पूर्वोक्तः अपबाहुकरोगो निवर्तते । उपमानं गतार्थमिति ॥ ११० ॥

**सूळक्खकोळकुञ्जरमेएहि वसाहि (ज ? बि)ळणिवासीण ।**
**अब्भंगो पीणुत्तुंगमणहरं कुणइ थणजुअळं ॥ १११ ॥**

**शूलाक्षकोलकुञ्जरमेदोभिर्वसाभिर्बिलनिवासिनाम् ।**
**अभ्यङ्गः पीनोत्तुङ्गमनोहरं करोति स्तनयुगलम् ॥**

महिषसूकरकरिणां मेदोभिस्तथा सर्पादीनां बि(ल ? ले)शयानां पूर्वोक्तयुक्तिगृहीताभिर्वसाभिश्चम्पुटनं (?) स्त्रीणां कुचयुग्मं पीवरोन्नतत्वेन सुन्दरं करोतीति । शरीरान्तर्गत आश्यानस्नेहो मेदः, द्रवरूपस्नेहादियुक्तिग्राह्यशुद्धमांसस्नेहो वसा इति ॥ १११ ॥

**माहिसणवणीअवआगअपिप्पळिकुट्ठतुरअगन्धाहि ।**
**सवणपओहरलिंगाण कुणइ थोरत्तणं ळेवो ॥ ११२ ॥**

**माहिषनवनीतवचागजपिप्पलिकुष्ठतुरगगन्धाभिः ।**
**श्रवणपयोधरलिङ्गानां करोति स्थूलत्वं लेपः ॥**

महिषीनवनीतेन सहोग्रगन्धाहस्तिपिप्पलीविषाणाश्वगन्धाभिः कृतो लेपः कर्णपाली(स्तन)नरचिह्नानां स्थौल्यं जनयतीति ॥ ११२ ॥

**तण्डुळजळेण परमञ्जणेण महिळाण णावणं दिण्णं ।**
**कुणइ पओहरजुअळं थिरथोरमणोहरुत्तुंगं ॥ ११३ ॥**

**तण्डुलधावनेन परमाञ्जनेन महेलानां नावनं दत्तम् ।**
**करोति पयोधरयुगलं स्थिरस्थूलमनोहरोत्तुङ्गम् ॥**

तण्डुलधावनेन सह स्रोतोञ्जनेन स्त्रीणां नस्यं प्रयुक्तं स्तनौ कठिनौ पीवरौ सुस्पर्शवर्णावुन्नतौ च करोतीति ॥ ११३ ॥

**माहिसणवणीअजुअं कुट्ठवआगअबळोब्भवं चुण्णं ।**
**ळेवेण कुणइ जुवईण पीणघणमणुहरे थणए ॥ ११४ ॥**

**महिषीनवनीतयुतं कुष्ठवचागजबलोद्भवं चूर्णम् ।**
**लेपेन करोति युवतीनां पीन(घन)मनोहरौ स्तनौ ॥**

माहिषनवनीतेन भावितं व्याध्युग्रगन्धानागबलानां सम्बन्धि चूर्णं स्त्रीणां लेपप्रयुक्तं स्तनावुक्तरूपौ करोति ॥ ११४ ॥

**दाडिमवक्कळभाविअसिद्धत्थअतेळ्ळतुंबिआ बहुसो ।**
**होन्ति थणा थिरथोरा सवणा वि हु मासळपळंव ॥ ११५ ॥**

दाडिमवल्कलसाधितसिद्धार्थकतैलाभ्यक्ता बहुशः ।
भवन्ति स्तनाः स्थिरस्थूलाः श्रवणान्यपि मांसलप्रलम्बानि ॥

दाडिमफलस्य रक्तबीजस्य वल्कलेन त्वचा शुद्धाम्बुस्थित्या पक्वं यद् गौरसर्षपतैलं तेनाभ्यक्ताः स्तनाः श्रवणानि चोक्तरूपा(णि) भवन्तीति ॥११५॥

**गोमहिसीघअसहिअं तेल्लं सामाकअञ्जलिवआहि ।**
**कडुअणिसासञ्जुत्ताहि सा(हि)अं णामणे दिण्णं ॥ ११६ ॥**
**कुणइ वअपरिणआण वि म(हि)ळाण तिसत्तरत्तलित्तेण ।**
**थणजुअळं पीणुत्तुंगथोरथिरमणहरच्छाअं ॥ ११७ ॥**

गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः ।
कटुकनिशासंयुक्ताभिः साधितं नावने दत्तम् ॥
करोति वयःपरिणतानामपि महेलानां त्रिःसप्तरात्रेण ।
स्तनयुगलं पीनोत्तुङ्गस्थूलस्थिरमनोहरच्छायम् ॥

गव्येन माहिषेण घृतेन तुल्यमात्रं तैलं प्रियङ्ग्वा तथा कृताञ्जल्या प्रसिद्धया तथोग्रगन्धया तथा कटुकरोहिण्या तथा पिण्डहरिद्रया एताभिस्तुल्यमात्राभिः पक्वं सत् नस्ये प्रयुक्तं स्त्रीणामुक्तरूपान् स्तनान् करोति । अत्र पाकयुक्तिद्रव्येभ्यः षोडशगुणं जलं द्रव्यचतुर्गुणं स्नेहं त्रयं क्षिप्त्वा शेषं ग्राह्यमिति युगलकम् ॥ ११६,११७ ॥

**मुण्डिअकसाअचुण्णेहि साहिअं पाणणामणविइण्णं ।**
**तेल्लं पडिअथणाणं वि कुणइ पीणुण्णए थणए ॥ ११८॥**

मुण्डितकषायचूर्णाभ्यां साधितं पाननावनवितीर्णम् ।
तैलं पतित(स्थूला ? स्तना)नामपि करोति पीनोन्नतौ स्तनौ ॥

श्रवणशीर्षकाथेन च सम्पादितं तैलं पाननस्याभ्यां युक्तमुक्तं कार्यं करोतीति । अत्र पाकयुक्तिकषायद्रव्यपलं षोडशगुणेन जलेन पक्त्वा चतुर्भागशेषे तस्मिन् जले कषायद्रव्यमुद्धृत्य गर्भस्नेहे पले तत् षड्भागं चूर्णस्य च दत्त्वा तैलशेषं ग्राह्यमिति ॥ ११८ ॥

**णिअदसणखुण्णगिरिअंविअडवि(ळासा ? साळा)ण बा-**
**[णपुंखा(इ ? ण) ।**
**मूळं पिहिळिअसमणं विळीविआ ओअणरअस्स ॥**

निजदशनक्षुण्णनिगीर्णपिचटविशालाया बाणपुङ्खायाः ।
मूलं प्लीहकशमनं विलेपिकाभोजनरतस्य ॥

शरपुङ्खाया ओषधिप्रतानविस्तीर्णाया मूलं स्वदन्तनिर्दलितं कृत्वा ग्रस्तं सद् वामपार्श्वान्तर्व(र्ती ? र्ति)कृष्णमांसविकारात्मकप्लीहाव्याधिनिवर्तकम् । कीदृशस्यातुरस्य, घनप्राया विलेपिकेत्युच्यते, तदशनरतस्य । भोजनान्तरपारिण(?) इत्यर्थः ॥ ११९ ॥

घेत्तूण जस्स णामं णिक्खिप्पइ इन्दवारुणीमूळं ।
फाळेऊण सुदूरे णासइ पिळिहो(अ)रं तस्स ॥ १२० ॥

गृहीत्वा यन्नाम निक्षिप्यते इन्द्रवारुणीमूलम् ।
पाट(लि ? यि)त्वा सुदूरे नश्यति प्लीहोदरं तस्य ॥

यस्य पुरुषस्य देवदत्तस्य प्लीहोदरं विनष्टमिति संज्ञायामुच्चार्य विशालामूलं द्विधा कृत्वा दूरे क्षिप्यते, तस्य प्लीहप्रधान उदरव्याधिर्निवर्तत इति ॥ १२० ॥

अन्तरधूमे++ऊण ळोणसहिआइ रूविअदळाइ ।
खाआइ म(थु ? त्थु)णा मिसिआइ पिळीहोअरहराइ
[॥ १२१ ॥

अन्तर्धूमेन दग्ध्वा लवणसहितानि रूपिकदलानि ।
(खादि)तानि मस्तुना मिश्रितानि प्लीहोदरहराणि ॥

अर्कवृक्षपत्राणि सैन्धवेन सह पुटपाकदग्धानि कृत्वा मस्तुना सह मिश्रयित्वा पीतानि पूर्वोक्तकार्यकराणि । अत्र मात्रा मेष्टद्रव्ययोः शशांशयोः(?) कर्षौ मस्तुपलानि त्रीणि ॥ १२१ ॥

पिप्पळि(मूळ ?)चुण्णं णिहुडुंगिदुद्धपरिभाविअं(ति)
[सत्ताहं ।
दिण्णमपहरइ उअरं महुरासणपाणणिरअस्स ॥ १२२ ॥

पिप्पलीचूर्णं सुधाक्षीरपरिभावितं त्रिसप्ताहम् ।
दत्तमपहरत्युदरं मधुराशनपाननिरतस्य ॥

मागधिकाचूर्णं सुधाक्षीरेण एकविंशतिरात्रिकृतभावनं सक्षीरादिद्रव्य-भोजनरतस्य उदरव्याधिं विनाशयतीति ॥ १२२ ॥

**एक्केण सिअपुणण्णवपाढाचक्कंकिआण मूळेण ।**
**उवसमइ झत्ति विद्दिही पीएण सतण्डुळजळेण ॥१२३॥**

एकेन सितपुनर्नवपाठाचक्राङ्कमूलानाम् ।
उपशाम्यति द्रागिति विद्रधिः पीतेन सतण्डुलजलेन ॥

श्वेतवर्षाभ्वस्तथा पाठाया वङ्क्यास्तथा सुदर्शनायाः सम्बन्धिनां मूलानां (पथ्या ? मध्या)देकतमेन तण्डुलधावनेन सहितेन शीघ्रमेव विद्रधिव्याधिर्निवर्तत इति ॥ १२३ ॥

**कअळिदळभूइगाळिअजळसिद्धविळेविआ विणासेइ ।**
**खइआउअरुब्भवसअळरोअजाळं तिरत्तेण ॥ १२४ ॥**

कदलीदलभूतिगालितजलसिद्धविलेपिका विनाशयति ।
खादितोद्भवसकलरोगजालं त्रिरात्रेण ॥

रम्भापत्राणां पुटपाकदग्धानां भस्मना मिश्रीकृतं सत् पटपूतं यत् पानीयं तेन पक्वविलेपिकावलेह्यप्राया पेया भुक्ता सती दिनत्रयेण सर्वज(ठर)-रोग(मा)मयसमूहं क्षपयति ॥ १२४ ॥

**कन्दळिआकन्दअगुळ............... ।**
**(वारेन्ति तक्ख)णच्चिअ किमिजाळअमुअरसम्भूअं ॥ १२५ ॥**

कन्दलिकाकन्दगुलघृतानि सितापीतानि खादितानि ।
वारयन्ति तत्क्षणमेव कृमिजालमुदरसम्भूतम् ॥

कन्दलिन्या निष्पर्यायाः तस्या मूलानां पलं गुलपलानि चत्वारि घृतपलानि चत्वारि पानीयपलानि षोडश एतत् सर्वमग्निना पक्वं लेहीकृत्य मात्रया खादितं जठरजान् सर्वकृमीन् पातयति ॥ १२५ ॥

**जो लिहइ रअणिविरमे णिंबदळामळअचुण्णमणुदिअहं ।**
**सो गाढकुट्ठविउडिअदेहो वि पुणो णवो होइ ॥ १२६ ॥**

यो लेढि रजनिविरामे निम्बदलामलकचूर्णमनुदिवसम् ।
स गाढकुष्ठविघटितदेहोऽपि पुनर्नवो भवति ॥

यः क्षपाक्षये पिचुमन्दपत्राणि आमलकानि च चूर्णीकृत्य मध्वादिना योजितानि प्रतिदिवसमभ्यासेनावलेह्यत्वेनोपयुङ्क्ते, स तीव्रत्वग्दोषविनाशित-शरीरोऽपि निवृत्तनिर्मूलव्याधित्वाद् भूयो जात इव निर्विकारः सम्पद्यत इति ॥ १२६ ॥

**सिन्धुविळंगसिवासोमरईसरिसवकरञ्जरअणीहि ।**
**सुरहिसळिळेण ळेवो कुट्ठहरो दिअहणाहो व्व ॥१२७॥**

**सिन्धुसैन्धवविलङ्गशिवासोमराजीसर्षपकरञ्जरजनीभिः ।**
**सुरभिसलिलेन लेपः कुष्ठहरो दिवसनाथ इव ॥**

सैन्धवलवणे(न) तथा कृमिघ्नेन तथा हरीतक्या तथा सोमराज्या चन्द्रलेखया तथा गौरसिद्धार्थकैः तथा करञ्जस्य नक्तमालस्य फलैस्तथा पिण्ड-हरिद्रया च एतैः समांशैः कल्कीकृतैर्गोमूत्रमिश्रितैः कृतो लेपः कुष्ठव्याधिं विनाशयति यथा भगवान् भास्कर इति ॥ १२७ ॥

**एक्को तिळाण भाओ दो भाओ सोमराइबीआण ।**
**खज्जन्ता णेइ खअं चळणे ददुं सुदुव्वारं ॥ १२८ ॥**

**एकस्तिलानां भागो द्वौ भागौ सोमराजिबीजानाम् ।**
**खाद्यमाना नयन्ति क्षयं चरणदद्रुं सुदुर्वारम् ॥**

सोमराज्याश्चन्द्रलेखायाः संबन्धिनां बीजानां द्वौ भागौ तृतीयस्तिला-नामिति भुज्यमानं चूर्णं पादत्वग्रोगविशेषं दुर्वाराख्यं घोरमपि क्षपय-तीति ॥ १२८ ॥

**अइअम्मिळतक्कसमं सुरहिजळं ळोणमीसिअं कहिअं ।**
**वणगोमअगण्डघट्टाइ ळेवेण हरइ खसराइं ॥ १२९ ॥**

**अत्यम्लतक्रसमं सुरभिजलं लवणमिश्रितं कथितम् ।**
**बनगोमयगण्डघृष्टानि लेपेन हरति खसराणि ॥**

अतिचुक्रेण गोरसेन तुल्यमात्रं गोमूत्रं सैन्धवेन संयुक्तं संपक्वं खसराणि त्वग्विकारविशेषमरण्यगोमयशकलघृष्टानि सन्ति लेपेन विनाशयतीति ॥१२९॥

**बवगअतुसगुञ्जाचुण्णमीसणवणीअळेविअं विहिणा ।**
**णासइ सतक्कतंबअ(कि)ट्टेण पळेविअं कुट्ठं ॥ १३० ॥**

व्यपगततुषगुञ्जाफलचूर्णमिश्रनवनी(तलेपि)तं विधिना ।
नश्यति सतक्रताम्रकिट्टेन वा लेपितं कुष्ठम् ॥

अथवा गोरसयुक्तताम्रमलेन कृतलेपो विनश्यतीति ॥ १३० ॥

**दुव्वासिन्धवहरिआळरअणिगोमुत्तमेळिअं सहसा ।**
**दद्दुं खसरञ्च तहा णासइ चिरआळजाअं पि ॥ १३१ ॥**

दूर्वासैन्धवहरितालरजनीगोमूत्रमिश्रितं सहसा ।
दद्रुं खसरं च तथा नाशयति चिरकालजातमपि ॥

शाड्वलं सैन्धवं लवणं हरितालं पिण्डहरिद्रा चैतत् समांशचूर्णीकृतं गोमूत्रेण मिश्रितं सदुपयुक्तं बहुकालोपन्नावपि दद्रुखसराख्यौ त्वग्विकारौ झटिति नाशयतीति ॥ १३१ ॥

**ससिरेहाचुण्णमीसजापिअदुद्धोब्भवं सुणवणीअं ।**
**सिअकुट्टहरं महुणा लीढं तक्काणुपाणेण ॥ १३२ ॥**

शशिरेखाचूर्णमिश्रितयापितदुग्धोद्भवं सुनवनीतम् ।
सितकुष्ठहरं मधुना लीढं तक्रानुपानेन ॥

शशिरेखायाः सोमराज्याश्चूर्णेन भाण्डमुपलिप्य कृतदधिभावमापादितं गव्यक्षीरं तन्मथित्वोत्पादितं शोभनं यन्नवनीतं तन्माक्षिकेण सहावलीढं तक्रेण सानुपानेन सितकुष्ठं श्वित्रं नाशयतीति ॥ १३२ ॥

**जळवट्टिअसेअप्फन्दमूळपंकेण ळित्तमणुदिअहं ।**
**पक्खेण व मासेण व सिअकुट्ठं वच्चइ विणासं ॥ १३३ ॥**

जलवर्तितसितश्वेतस्पन्दामूलपङ्केन लिप्तमनुदिवसम् ।
पक्षेण वा मासेन वा सितकुष्ठं व्रजति विनाशम् ॥

श्वेतगिरिकर्णिकाया मूलं पानीयेन पिष्ट्वा पाकीकृतं लेपेनोपयुज्यमानमभ्यासात् पक्षाद् मासाद् वा सितकुष्ठं नाशयतीति ॥ १३३ ॥

**माअंगकत्तिचित्तअचम्ममसीतेळ्ळपंकळेवेण ।**
**सिअकुट्ठदूसिआइ पि होन्ति सवण्णाइ अंगाइ ॥ १३४ ॥**

मातङ्गकृत्तिचित्रकचर्ममषीतैलपङ्कलेपेन ।
सितकुष्ठदूषितान्यपि भवन्ति सवर्णान्यङ्गानि ॥

हस्तिद्वीपिनोश्चर्मणी पुटपाकदग्धे कृत्वा तिलतैलमिश्रितेन तत्कज्जलकर्दमेन यो लेपस्तेन श्वित्रकलङ्कितानि गात्राणि स्ववर्णमचिरेणासादयन्ति, निवृत्तश्वित्राणि भवन्तीत्यर्थः । एतयोरेकैकमपि कार्यकरमिति ॥ १३४ ॥

**सिन्दूरपुररसञ्जणतुत्थाळसचुण्णमीसिअं कढिअं ।**
**कडुइळ्ळं चिरआलुब्भवं पि पामं विणासेइ ॥ १३५ ॥**

**सिन्दूरपुररसाञ्जनतुत्थालसचूर्णमिश्रितं (क्वथितम्) ।**
**कटुतैलं चिरकालोद्भवामपि पामां विनाशयति ॥**

सिन्दूरमिनपिष्टं तथा गुग्गुलुः तथा कृत्रिमाञ्जनं तथा तुत्थकं मयूरग्रीवाकारयोरन्यतमं तथालसं सिक्थकं तेषां समांशानां चूर्णेन शुद्धाम्बुस्थित्या पक्वं सर्षपतैलं लेपात् प्ररूढामपि पामाख्यां त्वग्विकृतिं विनाशयति । अथवा कटुतैलं सुतप्तं कृत्वा तन्मध्ये द्रव्याणि मिश्रीकृतानि लेपेनोपयुज्यमानमित्यर्थः । पामालक्षणम् —

"विस्फोटपिटका पामा कण्डूक्लेदरुजाधिका ।
सूक्ष्माख्या वारु(णो ? णा) बह्व्यः प्रायः स्फिक्पाणिकोर्परे ॥" १३५ ॥

**माहिसणवणीउम्मीसमिरिअसिन्दूरळेविआ बहुसो ।**
**णासइ पामा खळकुट्टिणिव्व धुत्तविडंबिआ दूरं ॥१३६॥**

**(माहिषनवनीतोन्मिश्रमरिचसिन्दूरलेपिता बहुशः ।**
**नश्यति पामा खलकुट्टिनीव धूर्तविडम्बिता दूरम् ॥)**

सिन्दूरमरिचयोः समांशं चूर्णं माहिषेण नवनीतेन मिश्रितं यत् तेन बहुवारं कृतलेपा पामात्यर्थं विनाश(मुप)यति धूर्तवञ्चिता कुट्टनीवेति ॥ १३६ ॥

**खंभारितरुफळाइं परिणअसुक्खाइ दुद्धसिण्णाइं ।**
**खइआइ पीअपित्तं ह(रइ ? रेन्ति) पच्छासिणो विहिणा ।**

**खम्भारीतरुफलानि परिणतशुष्काणि दुग्धस्विन्नानि ।**
**खादितानि पीतपित्तं हरन्ति पथ्याशिनो विधिना ॥**

खम्भारी श्रीपर्णी, काष्मर्याख्यानि फलानि परिपक्वानि ततः शोषितानि दुग्धेन सह स्विन्नानि सन्ति भुक्तानि पीतपित्तं पीतवर्णं पित्तं यद् दृश्यते तच्छमयन्ति क्षीरादिपथ्याशिनः । विधिरत्र क्वाथ्यद्रव्यपलं पानीयं च पलैरष्टभिः क्षीरपलान्यष्टौ सह क्वाथयित्वा चतुर्भागशेषं ग्राह्यम् । तत्क्वथितानि (प ? फ)लानि भु (क्ता ? क्त्वा) तेन क्षीरेणानुपानं कर्तव्यमिति ॥ १३७ ॥

**कइरोअफळिणिचन्दणमूळअवीआइ कुट्ठस(म)भाअं ।**
**उव्वट्टणअं सिह्माइ हरइ गन्धश्च सुसुअन्धं ॥ १३८ ॥**

कपिरोगफलिनिचन्दनमूलकबीजानि कुष्ठसमभागम् ।
उद्वर्तनं सिध्मानि हरति सुसुगन्धगन्धं च ॥

कपिरोगः कपिकच्छूः तथा प्रियङ्गुः तथा श्वेतचन्दनं तथा मूलकस्य बीजानि तथा नागकेसरं तथा कुष्ठानि एतानि समांशानि पानीये लेपीकृतान्युद्वर्तनप्रयोगेन सिध्माख्यं त्वग्विकारं शमयन्ति । अतिसुभगं च सौ(रं? रभं) भवतीति ॥ १३८ ॥

**फळहोइदळमूळअबीअमीसजंघाजडा(कि)ओ लेवो ।**
**महिएण मंगळदिणे दुब्भिक्तसमूहविद्दवणं ॥ १३९ ॥**

कार्पासीदलमूलकबीजमिश्रजङ्घाजटाकृतो लेपः ।
मथितेन मङ्गलदिने दुर्भिक्षसमूहविद्रवणम् ॥

फलिनीदलं (हीदलं?) कार्पासलतापत्रं तथा मूलकबीजं ताभ्यां सहितेन काकजङ्घामूलेन (मास्या ।) तक्रेण सम्पादितो लेपो भौमवारे प्रयुक्तं सिध्ममिति (प्र)सिद्धं दुर्भिक्षाख्यं त्वग्विकारं नाशयतीति ॥ १३९ ॥

**मोअन्दअरसपिट्ठेहि लेविअं मूळअस्स बीएहि ।**
**णासइ सिह्मारंभा खारुम्मीसाइ व णिसाइं ॥ १४० ॥**

मयूरकर(स)पिष्टैर्लेपितं मूलकस्य बीजैः ।
नश्यति सिध्मारम्भः क्षारोन्मिश्रयेव निशया ॥

नश्यति तथैवेति द्वितीयः प्रयोग इति ॥ १४० ॥

**मोरअकअळिक्खारं सतेल्लमेक्कक्कमं समुप्पसइ ।**
**कुंभण्ड(ण)ळक्खारं व (जो? गो)जलुम्मीसिअं सिह्मं**
**[॥ १४१ ॥**

मयूरककदलीक्षारं सतैलमेकैकं समुत्पुंसयति ।
कूष्माण्डनालक्षारं वा गोजलोन्मिश्रितं सिध्मम् ॥

अपामार्गस्यान्तर्धूमदग्धस्य भस्मनः, अथवा रम्भायाः पूर्ववद् गृहीतेन भस्मना द्वयोरेकतरस्य तैलमिश्रितस्य लेपः सिध्मं नाशयति । अथवा कूष्माण्डकं पुष्पफलं तस्य वृन्तं पूर्ववत् कृत्वा क्षारेण गोमूत्रसहितेन लेपः सिध्मं

**जळपिट्ठमाहिसच्छअणवेढ्डिआ मउअजळ(ण)संसिद्धा ।**
**अंगाणि कुणइ रअणी रोमाणि अ क(स ?)णअगोराइं [॥ १४२ ॥**

जलपिष्टमाहिषच्छगणवेष्टिता मृदुलज्वलनसंसिद्धा ।
अङ्गानि करोति रजनी (रोमाणि च) तापितकनकगौराणि ॥

पिण्डहरिद्रा चूर्णीकृता पानीयेन गुलिकात्वमापादिता ततो दर्भेण वेष्टिता ततो माहिषीपुरीषेण पृष्ठतोऽवकुण्ठिता मृद्वग्नौ पक्त्वा ततो निष्कृष्य लेपेनोपयुक्ता गात्राणि पामानिष्क्रान्तहेमोज्ज्वलानि करोति ॥ १४२ ॥

**(जो मज्जइ) तिळसरिसवरअणिणिसाकुट्ठळेविअसरीरो ।**
**सो होइ सुरहिदेहो मणुहरवण्णुज्जळावअवो ॥ १४३ ॥**

यो मज्जति तिलसर्षपरजनिनिशाकुष्ठलेपितशरीरः ।
स भवति सुरभिदेहो मनोहरवर्णोज्ज्वलावयवः ॥

रजनी पिण्डहरिद्रा । निशा दारुहरिद्रा । शिष्टं गतार्थमिति ॥ १४३ ॥

**जंबूदळककुभपसूअसबरसमभाअमेळिअं कुणइ ।**
**उव्वट्टणअं गिम्हे शरीरदुग्गन्धविद्दवणं ॥ १४४ ॥**

जम्बूदलककुभप्रसूनशबरसमभागमेलितं कुरुते ।
उद्वर्तनकं ग्रीष्मे शरीरदौर्गन्ध्यविद्रवणम् ॥

जम्बूदलानि सुरभिपत्रपल्लवानि तथा अर्जुनकुसुमानि तथा लोध्रमेतैः समांशैर्मिश्रीकृतैरुद्वर्तनं निदाघे घर्मादिजनितदेहदुरामोदशमनं कुरुते ॥ १४४॥

**ळामज्जअहेमसिरीससबरचुण्णेण मळिअदेहस्स ।**
**तअदोससेअपसरा गिम्हे विणिहोन्ति ळोअस्स ॥१४५॥**

ळामज्जकहेमशिरीषशबरचूर्णेन मलितदेहस्य ।
(त्वग्दोषस्वेदप्रसरान् ग्रीष्मे विनिघ्नन्ति लोकस्य ॥)

त्वग्दोषस्वेदयोर्दोषा अपसरन्ति ॥ १४५ ॥

**दळजळरुणमळआरुणविळेवणं हरइ देहदुग्गन्धं ।**
**विमळारणाळसहिअं(पीअं) वाळंबुसाचुण्णं ॥ १४६ ॥**

दलजलारुणमलयारुणविलेपनं हरति देहदौर्गन्ध्यम् ।
विमलारनालसहितं पीतं बालम्बुसाचूर्णम् ॥

दलं सुगन्धपत्रं, जलं वालकम्, अरुणमुशीरं, मलयं चन्दनम्, अरुणं कुष्ठम् एतैः कृतं विलेपनं शरीरदुरामोदं हरति । अथवा श्रमणशीर्षस्य चूर्णं निर्मलकाञ्चिकपीतमुक्तं कार्यं करोतीति ॥ १४६ ॥

**एक्को किरिमाळअणिंबदुद्धदाडिमसिरीसछल्लीहि ।**
**जळहर(सा)मारअणीहि मणोहरसळिळपिट्ठाहि ॥१४७॥**
**अण्णो णिंबदळसिवाडाडिमम्माअन्दवक्कळरसेहि ।**
**महिळाण अंगराओ णराण जंघाकसाओ व्व ॥ १४८ ॥**

**ए(तैः ? कः) किरिमालकनिम्ब(दुग्ध)डाडिमशिरीषत्वग्भिः ।**
**जलधरश्यामारजनीभिर्मनोहरसलिलपिष्टाभिः ॥**

**अ(न्यो) निम्बदलशिवाडाडिमाम्रवल्कलरसैः ।**
**महेळानामङ्गरागो नराणां जङ्घाकषायश्च ॥**

किरिमालस्यारग्वधस्य तथा पिचुमन्दस्य तथा शाबरस्य तथा डाडिमफलस्य वल्कलैस्तथा कीरतरोस्त्वग्भिः तथा मुस्ताप्रियङ्गुपिण्डहरिद्राभिरेतैः सर्वैः समांशैर्जलपिष्टैः कृतो रम्यो महेलानामङ्गरागोऽङ्गशोभाजनकमुद्वर्तनं भवत्येक आद्यः । अन्योऽपरः पिचुमन्दपत्रैस्तथा हरीतकीडाडिमरसानां बिल्वरसेन कृतकषायः पुरुषाणां जङ्घावर्णप्रकर्ष इति पूर्वापरगाथापठितौ स्त्रीपुरुषविषयौ द्वौ प्रयोगाविति ॥ १४७, १४८ ॥

**वा(अ?आ)रसोल्लळट्ठिमहुसक्करामहुविमीसिओ पीओ ।**
**अवहरइ रत्तपित्तं सकामळं पण्डुरोअञ्च ॥ १४९ ॥**

**वाशारसार्द्रयष्टिमधुशर्करामधुविमिश्रितं पीतम् ।**
**अपहरति रक्तपित्तं सकामिलं पाण्डुरोगं च ॥**

वाशाया आटरूषस्य निष्यन्देन आर्द्रा यासौ मधुयष्टिः तथा श्वेतशर्करा तथा माक्षिकम् एतद्विमिश्रीकृतं सत् पीतं रक्तपित्तं कामिलां पाण्डुरोगं च नाशयति । पानद्रव्यं वाशानिष्यन्द एव । तस्य पलत्रयेण मधुयष्टिशर्करयोः कर्षं माक्षिककर्षद्वये इत्युपयोग इति ॥ १४९ ॥

**वासअपळ्ळव(सु)रसं (कु)सुमरसुम्मीसिअं पिअन्तस्स ।**
**उवसमइ रत्तपित्तं सळिळेण हुआसपुञ्जो व्व ॥ १५० ॥**

वाशापल्लवस्वरसं कुसुमरसोन्मिश्रितं पिबतः ।
उपशाम्यति रक्तपित्तं सलिलेन हुताशपुञ्ज इव ॥

आटरूषकस्य पत्राणां स्वरसं चतुष्पलमात्रं माक्षिककर्षमात्रेण सह पिबतो रक्तपित्तं क्षणात् शाम्यति । आशुकार्यकरत्व-तिपादनार्थमुपमानमिति ॥ १५० ॥

अहिणवपीणसदुहिओ समरिअगुळदहिअपाणमत्तेण ।
पणमइ गोहुमपल्लवखिरचअभोअणे(ण) व्व ॥ १५१ ॥

अभिनवपीनसदुःखितः समरिचगुलदधिपानमात्रेण ।
स्वस्थीभवति गोधूमपल्लवकृसरभोजनेन वा ॥

तत्कालेन प्रतिपन्नेन प्रतिश्यायेन कदर्थितो दध्नो गुलमरिचयुक्तस्य पानमात्रात् पुरुषो निरामयीभवति । अथवा निस्तुषीकृतेन गोधूमेन तथा निष्पावाख्येन शिम्बधान्यविशेषेण सिद्धं गव्यघृतसंयुक्तं कृसरमश्नतः पूर्वोक्तकार्यसम्पत्तिरिति । घृतक्षीरनवनीतदधिमथिताादीनामविशेषोक्तो गव्यमेव सर्वत्र बोद्धव्यमिति ॥ १५१ ॥

जो पिबइ सअणकाळे सअणारूढो ससिअळत्थोअं ।
सळि(ळेण ? ळं) पीणसदुहिओ पणप्पइ सो तिरत्तेण ॥ १५२ ॥

यः पिबति शयनकाले शयनारूढः सशीतलस्तोकम् ।
सलिलं पीनसदुःखितः स्वस्थीभवति (स त्रिरात्रेण) ॥

स्पष्टार्था गाथा ॥ १५२ ॥

कळितरु(फळ)सिन्धुकणाचुण्णं चुक्केण ळीढमवहरइ ।
सरसेअं तंबादुद्ध(तीअमासळो ? पीअमामळ)अचुण्णोव्व
[॥ १५३ ॥

कलितरुफलसैन्धवकणाचूर्णं चुक्रेण लीढमपहरति ।
स्वरभेदं ताम्रादुग्धेन पी(ता ? तमा)मलकचूर्णं वा ॥

विभीतकफलं तथा सैन्धवं लवणं तथा पिप्पलीचूर्णं समांशमेकीकृत्य (शुक्लेना ? चुक्रेणा)वलीढं सत् कण्ठवैस्वर्यं नाशयति । अथवा गोक्षीरेण पीतं धात्रीचूर्णमिति ॥ १५३ ॥

**समतुलिअकुरुंमीसिअजणणिबसेकोळपळ्ळवसिहाहि।**
**विउणा वि बळामूळाधूमो कासं समुप्पसइ ॥ १५४ ॥**

समतुलितपुरोन्मिश्रितजननी(वाशा)कोलपल्लवशिखाभिः ।
द्विगुण पि बलामूलाधूपः कासमुत्पुंसयति ॥

जनन्याः सुमनसो वृक्षस्य वाशायास्तथा कोलस्याम्बूवदनस्य पत्रमूलाभ्यामित्येतैः समांशैः एतेषां तुल्येन गुग्गुलुना कृतो धूपः । कीदृशः । (ऐतषां पुवर्ज्यै?) सर्वेषां द्विगुणपरिमाणं नागबलाया मूलं यस्मिन् तथाविधः कासव्याधिं शमयति । अस्य धूमपानेन प्रयोग इति तस्य विधिर्जान्वोः समे सुखासने स्थित्वा शरावसम्पुटेऽन्तस्थमृद्वग्निक्षिप्तचूर्णस्तोकादुत्थितं धूममू(र्ध्वे)शरावमध्यकृतामलकाण्डपरिमाणच्छिद्रयोजितदशद्वादशाङ्गुलप्रमाणदीर्घे(ध ? ण) नळिनिकादिना निराकुलं कृत्वा वक्षःप्रदेशपर्यन्तं तुङ्गवत् प्रपीत्वा तथैव तत्कालमेव मुखेनोद्वमेत् । ततो निष्ठीवनशान्तौ पुनरेव पिबेत् यावद् वारत्रयम् । ततः श्लेष्मशान्तौ सत्यामनुपानं गुलदुग्धमिति ॥ १५४ ॥

**पुरजाइजटाकिसळअमोरअफळकोळपळ्ळवसिळाहिं ।**
**वत्ती सरीरधूवाहि हरइ खारग्गिण कासं ॥ १५५ ॥**

पुरजातिजटाकिसलयमयूरफलकोलपल्लवशिलाभिः ।
वर्त्तिः शरीरधूपाद्धरति बदराग्निना कासम् ॥

गुग्गुलुना तथा सुमनोमूलपल्लवाभ्यां तथापामार्गफलैस्तथा बदरपत्रैस्तथा मनश्शिलाभिः एतैः समांशैर्जलवर्तितैः कृता वर्तिर्बदरकाष्ठाग्निना गन्धाधूपेन देह धिवासनादेव कासमपहरतीति ॥ १५५ ॥

**भोअणसमए महुणा पिप्पलितिहळाण चुण्णमवलीढं ।**
**सिम्भुब्भवजडपीणससो(स)महासासविद्दवणं ॥ १५६ ॥**

भोजनसमये मधुना पिप्पलित्रिफलायाश्च चूर्णमवलीढम् ।
श्लेष्मोद्भवजळपीनसशोषमहाश्वासविद्रावणम् ॥

मागधिकात्रिफलयोर्द्रव्यचतुष्टयस्य समांशस्य चूर्णं माक्षिकेण सहान्नभोजनेऽवलेहनोपयुक्तं कफोत्थं जाल्यं (प्रति चतुष्टयस्य समांशस्य चूर्णं माक्षिकेण सह ? )प्रतिश्यायं तथात्युद्बणं श्वासमपसारयतीति ॥ १५६ ॥

पवळं पि हरइ हिक्कं सासम(दि)प्पसरिअं णिवारेइ ।
सिहिपिञ्जहूइपिप्पळिचुण्णं महुमीसिअं ळीढं ॥ १५७॥

प्रबलामपि हरति हिक्कां श्वासमतिप्रसृतं विनाशयति ।
शिखिपिञ्छभूतिपिप्पलीचूर्णं मधुमिश्रितं लीढम् ॥

करिसं काळिहळचुण्णस्स ळीढमचन्तमीसिअं महुणा ।
गुरुसासवाहिविउडणमुद्धंसिहरञ्ज जिमिअम्मि॥१५८॥

कर्षं कलिफलचूर्णस्य लीढमत्यन्तमिश्रितं मधुना ।
गुरुश्वासव्याधिविघटनमूर्ध्वशिहरञ्ज जिमिते ॥

विभीतकफलचूर्णस्य विलाळपदकं माक्षिकसंयुक्तं भुक्तोत्तरमवलेहनोपप्रवृद्धश्वासकासहरमिति ॥ १५८ ॥

घअकुसुमसारळीढं खअं खअं णेइ गअबळामूळं ।
पसुदुद्धेण (च?व) पीए कुरङ्गपसुपळरओ विहिणा ॥ १५९ ॥

घृतकुसुमसारलीढं क्षयं क्षयं नयति गजबलामूलम् ।
पशुदुग्धेन वा पीतं कुरङ्गपशुपलरजो विधिना ॥

गव्यसर्पिष माक्षिकेण च सह नागवलाचूर्णमवलेहनोपयुक्तं क्षयव्याधिं राजयक्ष्माणं क्षपयति । अथवा छागक्षीरेण पीतं कुरङ्गमृगस्य तथा छागस्य पलरजः शुष्कमांसचूर्णमुक्तं कार्यं करोति ॥ १५९ ॥

घअसहिअं कइ(कव्वं) णीळीमूळ व्व दुद्धसञ्जुत्तं ।
विउडेइ राअमन्दं दन्तिसमूहं मइन्द व्व ॥ १६० ।

घृतसहितं कपि(द्र?क)व्यं नीलीमूलं वा दुग्धसंयुक्तम् ।
विघटयति राजमान्द्यं दन्तिसमूहं मृगेन्द्र इव ॥

गव्यसर्पिषा मर्कटमांसमथवा नीलीमूलं गव्यक्षीरसहितमुपयुक्तं नृपव्याधिं राजयक्ष्माणं नाशयति । सक्रत्करत्वप्रतिपादनार्थमुपमानमिति ॥ १६०॥

चुण्णं महुसञ्जोइअहअगन्धाकन्दगोक्खुरफळाणं ।
सोसमोसिरिअबळाणं दुद्धं पी(ते?ए) बळं कुणइ ॥ १६१ ॥

चूर्णं मधुसंयोजितहयगन्धाकन्दगोक्षुरकफलयोः ।
शोषम(प)सृतबलानां दुग्धं पीतं बलं कुरुते ॥

हयगन्धामूलश्वदंष्ट्रामूलयोः समांशयोश्चूर्णं माक्षिकसहितं छागक्षीरेण क्वथितशीतेन पीतं क्षयेणापगतसामर्थ्यानां बलाधानं करोतीति ॥ १६१ ॥

**विह्णुक्कन्ता सोसं खवेइ सेळञ्जणेण सञ्जुत्ता ।**
**दुद्धेण केवळेण वाअसजंघव्व पिज्जन्ती ॥ १६२ ॥**

विष्णुक्रान्ता शोषं क्षपयति शैलाञ्जनेन संयुक्ता ।
दुग्धेन केवलेन वा वायसजङ्घा (वा) पीयमाना ॥

विष्णुक्रान्ता नीलपुष्पी सौवीराञ्जनेन सह क्षीरेण पीता शोषं क्षपयति। दुग्धेन केवलेन वा वायसजङ्घा पीयमाना । (विष्णुक्रान्ता नीलपुष्पी सौवीराञ्जनेन सह पीता शोषं नाशयति अथवा काकजङ्घैव क्षीरेण सह पीतेति ?) ॥ १६२ ॥

**हअगन्धादुद्धाळिआचुण्णं दुद्धेण पिअइ जो मासं ।**
**दुद्धाहारो (सो) दुब्बळो वि पीणत्तणं ळहइ ॥ १६३ ॥**

हयगन्धादुद्धालिकाचूर्णं दुग्धेन पिबेद् यो मासम् ।
दुग्धाहारः स दुर्बलोऽपि पीनत्वं लभते ॥

अश्वगन्धार्कपुष्पिकयोश्चूर्णं गव्यक्षीरेण प्रत्यहं मासं यः पिबति, स क्षीणबलोऽपि बललाभात् पीवरत्वं प्राप्नोतीति ॥ १६३ ॥

**जवतीळतुरगगन्धाणाअबळामासगुळणिसेवीण ।**
**होइ बळं णवजोव्वणवणवारण(वारण)समत्थं ॥ १६४ ॥**

यवतिलतुरगगन्धानागबलामाषगुलनिषेवणात् ।
भवति बलं नवयौवनवनवारण(वारण)समर्थम् ॥

अक्षततिलाश्वगन्धागाङ्गेरुकीमाषान् समांशांश्चूर्णीकृत्य गुलेन द्विगुणांशेन सह ये समुपयुञ्जते, ते तरुणारण्यकुञ्जरप्रतिषेधक्षमसामर्थ्यं प्राप्नुवन्तीति ॥ १६४ ॥

**तिहळा सळोहचुण्णं महुणा परिणामसूळमवहरइ ।**
**कढिअजळमिळिअगाळिओ व्व सुसहसंभुक्कखारेण**
**[ ॥ १६५ ॥**

त्रिफला सलोहचूर्णा मधुना परिणामशूलमपहरति ।
क्वथितजलमिलितनिर्गीर्णं वा सूक्ष्मशम्बूकक्षारेण ॥

हरीतकीविभीतामलकानि त्रीणि यावत्प्रमाणानि, तावत्प्रमाणेनैव शङ्ख-चूर्णेन सहितानि माक्षिकेण सहोपयुक्तानि अन्नपरिणामकालजं हृच्छूलमपहरति । अथवाशीततोयेन मिलितं सत् पीतं सूक्ष्माणां नलादिप्रदेशजानां शङ्खानां पुटपाकदग्धानां भस्मोक्तकार्यं करोति ॥ १६५ ॥

**डड्ढमणिग्गअधूअं मअसंगं गोघईण सह पीअं ।**
**हिअअणिरिप्पासूळं हरइ सिही दारुणिवहं व्व ॥ १६६॥**

दग्धमनिर्गतधूपं मृग(व्य ? शृ)ङ्गं गोघृतेन सह पीतम् ।
हृदयपृष्ठ(वर्तिशूलं) हरति शिखी दारुनिवहमिव ॥

हरिणविषाणमन्तर्धूमदग्धं गोघृतेन सह पीतं हृत्पृष्ठवर्ति शूलमपहरति । उपमानमाशुकार्यकरत्वप्रतिपादनार्थम् इति ॥ १६६ ॥

**सोवच्चळहिङ्गुमहोसहेहि पीएहि (का ?)काढिअजळेण ।**
**दोग्गच्चेण सुहाइ व णासन्ति समत्थसूळाइं ॥ १६७ ॥**

सौवर्चलहिङ्गुमहौषधैः पीतैः क्वथितजलेन ।
दौर्गत्येन सुखानीव नश्यन्ति समस्तशूलानि ॥

रुचकरामठनागरैः गृहपानीयपीतैः सर्वशूलानि निवर्त(न्ते) । व्यक्तार्थमुपमानमिति ॥ १६७ ॥

**णासइ फुडमइसारो वरजळपिट्ठेहि तक्कपीएहि ।**
**वडपाअपप्परोहंकुरेहि कुळमविणअं व ॥ १६८ ॥**

नश्यति स्फुटमतिसारो वरजलपिष्टैस्तक्रपीतैः ।
वटपाद(प)प्ररोहाङ्कुरैः कुलमविनयमिव ॥

वटपादपस्य न्यग्रोधवृक्षस्य ऊर्ध्ववृत्तशाखोद्गतैर्मूलाङ्कुरैस्तण्डुलोदक-पिष्टैः पश्चाद् गोरसेन पीतैः निश्चितमतिप्रवृत्तं नश्यतीति सुबोधार्थमुपमानमिति ॥ १६८ ॥

**जळमसिणपिट्ठकोमळबन्धूळदळेहि पीअमत्तेहि ।**
**सइ पसरिओ (वि) थक्कइ अइसारो मुट्ठिगहिओ व्व ॥१६९॥**

जलमसृणपिष्टकोमलबन्धू(ल)दलैः पीतमात्रैः ।
सदाप्यतिसृतोऽपि तिष्ठत्यतिसारो मुष्टिगृहीत इव ॥

जलेन सूक्ष्मपिष्टानि यानि बन्धूलकस्य किङ्किरातस्य पत्राणि तैः पीतमात्रैः नित्यं प्रवृत्तोऽप्यतिसारो निरुध्यते। यथा मुष्ट्यावष्टब्धः के(न)चिद् बलवता कश्चिन्निरुध्यत इति ॥ १६९ ॥

**महुसक्करासणाहं तण्डुळधुअणेण पीअमणुदिअहं ।**
**हरइ रुहिराइसारं घणरवमूळं तिरत्तेण ॥ १७० ॥**

मधुशर्करासनाथं तण्डुलधुवनेन पीतमनुदिवसम् ।
हरति रुधिरातिसारं घनरवमूलं त्रिरात्रेण ॥

माक्षिकसितशर्कराभ्यां युक्तं घनरवस्य लोहिलीसस्य मूलं गोष्ठोदकेन पिष्ट्वा पीतं रक्तातिप्रवृत्तं त्रिरात्राभ्यासान्निवारयतीति ॥ १७० ॥

**तण्डुळजळपिट्ठंकोल्लमूळकरिसद्धपाणम(व)हरइ ।**
**सव्वाइसारगहणीरोअसमूहं महाघोरं ॥ १७१ ॥**

तण्डुलजलपिष्टाङ्कोलमूलकर्षार्ध(मात्र? पान)मपहरति ।
सर्वातिसारग्रहणीरोगसमूहं महाघोरम् ॥

वरजलेन पिष्टमिरिकिल्लस्य मूलं तोलकमात्रपरिमाणं पीतं सत् सर्वेषामतिसाराणां च वृन्दं विनाशयति ॥ १७१ ॥

**चुण्णं मरिअमहोसहकुडअजडाविउणभाअकमवधिअं ।**
**गुळमीसमहिअपीअं गहणिमहावाहिविद्दवणं ॥ १७२ ॥**

चूर्णं मरिचमहौषधकुटचत्वग्भिर्द्विगुणभागक्रमवृद्धम् ।
गुळमिश्रमथितपीतं ग्रहणीमहाव्याधिविद्रवणम् ॥

ऊषणस्य तथा नागरस्य तथा कुटचस्य एषामुत्तरोत्तरद्विगुणभागतया वृद्धं चूर्णं गुळमिश्रेण तक्रेण पीतं ग्रहणीशैथिल्यात्मकं महाव्याधिं द्रावयति इति ॥ १७२ ॥

**मोरअतण्डुळमाहूअसारगिरिकण्णिआहळद्दीहि ।**
**अञ्जणगुळिआ णिहणइ विसूइअं तिअडुसणाहा ॥१७३॥**

मयूरकतण्डुलमाधूकसारगिरिकर्णिकाहरिद्राभिः ।
अञ्जनगुलिका निहन्ति विषूचिकां त्रिकटुसनाथा ॥

एभिर्द्रव्यैः कृताञ्जनगुलिका विषूचिकाख्यमजीर्णरोगं नाभ्यञ्जनेन नाशयति । कैः । अपामार्गस्य बीजैः स्तबकगृहीतया मधुयष्ट्या तथाटव्या तथा पण्डहरिद्रया तथा शुण्ठिमरिचपिप्पलीभिरित्येतैः समांशैर्जलपिष्टैरिति ॥ १७३॥

**तिहलालोहसिलाजउहरडइचुण्णाण लीढमेक्केक्कं ।**
**महुणा ग(ळू)इसुरसो व्व (सव्व)मे(हे ? हं) णिवारेइ ॥ १७४॥**

त्रिफलालोहशिलाजतुहरीतकीचूर्णानां लीढमेकैकम् ।
मधुना गुळूचीस्वरसो वा सर्वमेहं निवारयति ॥

त्रिफलायास्तथा शस्त्र चूर्ण ?,स्य तथा मनःशिलानिःष्यन्दस्य तथा पथ्यायाः सम्बन्धिनां चूर्णानामेकैकं माक्षिकेण सहावलीढं सर्वमेहान् बहुमूत्ररूपव्याधिभेदान् अपवारयतीति । अथवा गुळूच्या अमृतायाः स्वरसः पीतः सन् पूर्वोक्तं कार्यं करोति ॥ १७४ ॥

**अच्चन्दमसिणमहिणवणिम्मळमहुमीसिअं णिसाचुण्णं ।**
**आमळअरसोम्मीसं णासेइ पमेहसन्दोहं ॥ १७५ ॥**

अत्यन्तमसृणमभिनवनिर्मलमधुमिश्रितं निशाचूर्णम् ।
आमलकरसोन्मिश्रं नाशयति प्रमेहसन्दोहम् ॥

पिण्डहरिद्राचूर्णमतिसूक्ष्मपिष्टमपुराणनिष्कलङ्कमाक्षिक तथामलकरसेन सह पीतमुपयोगात् प्रमेहव्याधीन् सर्वान् निवारयति इति ॥ १७५ ॥

**गोधावईइमूलं कढिअं घअतेल्लगोरसुम्मीसं ।**
**मुत्तमइरुद्धपसरं (वि) पीअमत्तं पवट्टेइ ॥ १७६ ॥**

गोधावतीमूलं क्वथितं घृततैलगोरसोन्मिश्रम् ।
मूत्रमतिरुद्धप्रसरमपि पीतमात्रं प्रवर्तयति ॥

गोधावत्याः (स्त्री?श्री)पर्ण्या मूलं गोरसेन तथा घृततैलाभ्यां भृष्टं पीतमत्यन्तगाढमूत्रकृच्छ्रमाशु निवर्तयति । पूर्वं घृततैलभृष्टं पश्चाद् गोरसेन पक्तव्यमिति ॥ १७६ ॥

**पाणाहवाहिपीडं सोवचळमीसिआ सुरा हरइ ।**
**महुदुद्धेहि तिरत्तं पीआ तिळणाळभूइ व्व ॥ १७७ ॥**

अश्मरीव्याधिपीडां सौवर्चलामिश्रिता सुरा हरति ।
मधुदुग्धाभ्यां त्रिरात्रं पीता (तृण ? तिल)नालभूतिर्वा ॥

अश्मरीरोगजं वारुणी रुचकसंयुक्ता पीता सती नाशयति। अथवा तिलकाण्डानां भस्म माक्षिकक्षीराभ्यां सह पीतमेतत्कार्यं करोति इति ॥ १७७ ॥

**वच्छक्काडिआमूळं परिवासिअजळेग पीअमणुदिअहं।**
**पाडेइ पच्छणिरअस्स सक्करं तइअदिअहम्मि ॥ १७८ ॥**

वच्छकर्कटिकामूलं पर्युषितजलेन पीतमनुदिवसम् ।
पातयति पथ्यनिरतस्य शर्करां तृतीयदिवसे ॥

वच्छकर्कटिकाया गोपाया (कर्कटिका?)मूलं पर्युषितेन रात्रिपूर्वस्थापितेन जलेन पिष्टं प्रातः प्रातः प्रत्यहं तेनैव सह पीतं सत् पथ्याशिनः शर्कराख्यं ग्राधिविशेषं निस्सारयति तृतीयेऽह्नीति ॥ १७८ ॥

**पीआ दुद्धुम्मीसा कम्मओडिजडा दसाहमत्तेण ।**
**भइकण्डसक्करं हिन्तिऊण कढिअं पि पाडेइ ॥ १७९ ॥**

पीता दुग्धोन्मिश्रा कपोटिजटा दशाहमात्रेण ।
अप्यण्डशर्करां भित्त्वा कठिनामपि पातयति ॥

कपोट्या(अ)र्कपुष्प्या मूलं गव्यक्षीरेण सह पीतं (दधि? दिन)दशक्रमाभ्यासादतिकर्कशामप्यण्डगतां शर्करां विदार्य पातयति इति ॥ १७९ ॥

**गिह्मुप्पोडिअमाळइमूळं पसुदुद्धसाहिअं ससिअं ।**
**(पीअं)मुत्तणिरोहण्डसक्करादुक्खविद्दवणं ॥ १८० ॥**

ग्रीष्मोत्पाटितमालतीमूलं पशुदुग्धसाधितं ससितम् ।
पीतं मूत्रनिरोधाण्डशर्करा(दुःख)विद्रावणम् ॥

निदाघो(न्मी? न्मू)लिताया: सुमनोलताया मूलं छागक्षीरेण सितशर्करया च साधितं सत् पीतं मूत्रकृच्छ्राण्डशर्कराव्यथानिवारणम् । अत्र साधनविधिः पानीयपलानि षोडश द्रव्यपलेन सह क्वाथयित्वा चतुर्भागशेषं ततो द्रव्य-(मपा)स्य तेनैव जलेन सह क्षीरपलानि चत्वारि क्वाथयित्वा क्षीरं ग्राह्यमिति ॥

**गळगण्डगण्डमाळा क्कुरण्डरोआविणेण णासन्ति ।**
**कअळेवातण्डुळधुअणपिट्ठदिअळ्ळं(?) ॥ १८१ ॥**

[* नमः प्रयोगै(?) प्रयोगसम्बन्धैरौषधैर्मन्त्रसंयु(क्तैः ? तैः) ।
भिषग्वरकृतैः शास्त्रैस्तथान्यग्रन्थमि(श्रैः ? श्रितैः) ॥
मन्त्रैश्च विविधैः प्रोक्तं वामदक्षिणकैस्तथा ।
सर्वतः सारभूतं तु यत्तद् वक्ष्याम्यशेषतः ॥

* इतः परं मातृकायां ग्रन्थांशो लुप्त इति, 'पुत्तलिकापञ्चविंशतिका समाप्ता' इत्येन्तं दृश्यमानो ग्रन्थः प्रक्षिप्त इति च प्रतिभाति ।

नाम्ना मिश्रकमित्युक्तं सर्वस्रोतसमुच्चयम् ॥
तत्र कर्म प्रवक्ष्यामि यथायोगसुखप्रदम् ।
सिद्धयोगा यथा मन्त्रा धूलिकर्माणि चैव हि ॥
धूपाश्च विविधाश्चान्ये स्नानवर्तिविलेपनम् ।
विदग्धैर्विविधैः प्रोक्तास्तथान्यैः शास्त्रचिन्तकैः ॥
तदहं चैकतो वक्ष्ये सुभाषितकरण्डकम् ।
हर आगमलागर्ते संज्ञावर्णसमन्वितम् ॥
मारयस्वपदैर्युक्तं रेफस्सान्तरईसमम् ।
कद्वितीयाविसर्गेण हुंफडन्तनियोजितम् ॥

अत्र मन्त्रः —

ओं भूगोलगर्भे अमुके मारय ह्रीं खः ह्रूं फट् ।

शुष्कमाषाष्टसंयुक्तां कुर्यात् पुत्तलिकां शुभाम् ।
स्त्रीपुंसयोः स्वरूपेण माने द्वादशके स्वके ॥
पुंसोऽस्थिकेन सम्मथ्य शङ्कुं कुर्याच्चतुरङ्गुलम् ।
हृदये निखनेत्तद्धि स्नाप्यश्चेयोद्भवे मृणा ॥
स्थापयेद् वह्निसंस्थाने पूजयेद् दिनसप्तकम् ।
त्रिपञ्चार्णयुतं मन्त्रं मारयेत् त्रिदशानपि ॥
गुलात्तीयनमेतद्धि विद्वेषे रिपुनिग्रहे ।
किण्टं सप्तदिनोषितं सुनिहितं गोमूत्रतोये स्थितं
रजश्मशानारिपुपादकण्टका सविषं सर्पकञ्चुकम् ।
एतैः कण्टकवेधितां प्रतिकृतिं साम्ये रिपुं चालिखेत्
पश्चाद्वा लिखितं च पूजय महाकालं ततोऽस्याः स्तनौ ॥
सप्ताहं कुसुमानि चूर्णमपि तथा कृष्णं विषं धूपनं
रक्तं पानमतिप्रसादय तथा कामं मु(मु)क्षुस्तथा ।
अत्र मन्त्रं प्रवक्ष्यामि येन कर्म प्रसिद्ध्यति ॥

ओं नमो गणपतये महाकालाय हन गृह्ण तापय अमुं मारय मारय ग्लां हूं फट् ।

अनेन मन्त्रेणालोड्य कारयेत् प्रतिमां ततः ।
चुल्लीपृष्ठे तथा आमे शवे स्था(ने) तथा गृहे ।
श्मशाने वान्यदेशे वा यत्र वा रोचते मनः ॥

तत्र स्थाने कृतं चैवं मृत्युरेष्यति वं नरम् ।
नरस्य दक्षिणा कार्यां (स्त्रया ? स्त्रिया) वामेन कारयेत् ॥

माषयवतण्डुलपिष्टैः पुत्तलिकां कृत्वा शुक्तेनालोड्य विपराजिकारकेले पयेच्चतुरङ्गुलं मानुषास्थिमयं कीलकगतशूलमुत्पद्यते । अमुद्धृते मारयति । उद्धृते मोक्षः । अस्य मन्त्रं प्रवक्ष्यामि । ओं त्रैशिखे ज्वालामुखि ह्रीं हाहा भूं हहहै फट् हें हैं नमः ओहन्नतमृफक्तिश्च शय त्रूं त्रूं हूं ह्रीं पाशहस्ते अमुकं मारय फट् । (स्त्रया ? स्त्रिया)वा पुरुषस्य क्रियते । एषा सिद्धिः । मानुषास्थिचूर्णं गोधूमराजिकातण्डुलाढकैर्व्यामिश्रं शुक्तेनालोड्य प्रादेशमात्रां पुत्तलिकां कृत्वा खदिरकीलकां खात्वा रोहदि शिरसि बाहुद्वये च विषयाष्टसहस्रं जप्तं कृत्वा सप्ताहपूजनान्मारयति । गुह्यमातरं संपूज्य मन्त्रमेतमनुस्मरेत् ।

हे कालि काकरुदिते काकि पिण्डोपहारिणि ।
अमुकस्य हृदयं भित्त्वा गच्छ काकि यथासुखम् ॥

ओं ह्रीं क्रां अमुकं मारय ह्रीं फट् । पुरुषस्य पुरुषास्थिभिः (स्त्रया ? स्त्रियाः) स्त्र्यस्थिभिः कार्यम् । एषा सिद्धिः ।

श्मशानास्थिमयं भस्म शत्रुपांसुपदच्युतम् ।
यवशिष्टं तु मोटाह्वा स्वरक्तेन क्षपेत् + + ॥
शत्रुनामयुतां कृत्वा याम्यायां स्थापयेद् दिशि ।
शुनोऽस्थ्ना हृदये विद्ध्वा नरकेशैश्च वेष्टयेत् ॥
विलोमेनैव हृदये जप्तव्या साधकेन तु ।

ओं जम्भे मोहे नमः ।

सप्ताहं तापयेद् यत्नाच्छत्रूणां नाशनाय च ।
निखनेद् यत्र संस्थाने मन्त्रेणानेन संयुताम् ॥

ओं रुद्राय वज्रतुण्डाय गणेभ्यः । उद्धृते मोक्षः तापमध्ये स्वस्थीकरणम् ।

मानुषास्थीनि संपूज्य विषेण सह पेषयेत् ।
रक्तेन बोधिकां कृत्वा कुर्यात् पुत्तलिकां शुभाम् ॥
साध्यनामाक्षरैर्युक्तां तस्य कर्णे तु बन्धयेत् ।
चुल्लिमध्यस्थितां कुर्यादुत्तमामुक्तराशिना ॥
वामेन पाणिना चैव अष्टधारां तु कारयेत् ।
ततस्तु ज्वलिते वह्नौ तत्क्षणाद् दह्यते भृशम् ॥

सत्वे पतति मोहात्तु यदि ब्रह्मा स्वयं भवेत् ।
सिद्धमेवं प्रयोगं तु कुर्यात् खे मन्त्रवित् तदा ॥

ओं ह्रीं आज अमुकं नाशय फट् ।

सर्षपानथ सञ्चूर्ण्य सिक्तकेन सहैव तु ।
ततः पुत्तलिकां कृत्वा नामाक्षरसमन्विताम् ॥
कपाले निहितामेतां मुक्तकेशो निशामुखे ।
गृहीत्वा वामहस्तेन मन्त्रमष्टशतं जपेत् ॥

ओं ह्रीं ज्रूं आं जं अमुकं मे वशमानय स्वाहा ।

अनेन मन्त्रराजेन योजनानां शतैरपि ॥
आनयेद् यक्षकन्याश्च किं पुनर्मानुषस्त्रियः ।

पुरुषं वा,

चिताभस्म गृहीत्वाथ पादपांसुसमन्वितम् ॥
शुक्तेन भावयेदेतद् विषेण च समन्वितम् ।
कृष्णाष्टम्यां चतुर्दश्यां कपाले कारयेत् कृतिम् ॥
चित्यङ्गारे च पत्रे च शत्रुनाम निवेशयेत् ।
विषेण सह संलिप्य मन्त्रेणानेन बुद्धिमान् ॥

ओं नमो भगवति कामरूपिणि माये महामाये स्फुटं स्फोटय रौद्रकर्माणि साधनीकुरु । याम्ये यमान्तिके घातय ओं नमो भगवति अप्रतिहतशक्तिदमनि दारय शी(घं ? घ्रं) नाशय हूं फट् ।

काकपक्षेण संलिख्य मन्त्रं हृदि निवेशयेत् ।
शवकेशेन संवेष्ट्य चीरिकां तत्र निक्षिपेत् ॥
अग्निस्थाननिविष्टातो मन्त्रेशेनापतान्वितम् ।
एवं विधानतः कुर्यात् प्रपन्नः साधकोत्तमः ॥
मातृभिः सहितं पूज्यं भैरवं तु स चाङ्कुशम् ।
द्विसप्ताहकृते जापे शत्रुः प्राणैर्वियुज्यते ॥
इत्येतद् गुह्यमुद्दिष्टं न देयं यस्य कस्य चित् ।
यवतण्डुलगोधूमचूर्णमात्राणि योजितम् ॥
श्मशानभस्मना युक्तां कुर्यात् तद्रूपतत्कृतिम् ।

भावयेत श्वमूत्रेण विषघृष्टं लिखेत्तु ता ।
शवकेशेन संवेष्ट्य चीरिकान्ताति निक्षिपेत् ॥
नरास्थि शङ्कुग्रीवायां द्वितीयं चैव वक्षसि ।
कृत्वा यममयी शूली गुह्यदेशे तु निक्षिपेत् ॥
सहस्रपरिजप्तानां कुर्यान्मन्त्रवरेण तु ।
भैरवं च शिवादूतीं याम्यां ज्वालामुखीं तथा ॥
मध्ये ह्यत्र कृता गौरी न विगर्भेह कर्हिचित् ।
होमयेच्चितिकं भस्म विषमर्ध्यं यया सह ॥
होमं कृत्वा त्रिसन्ध्यान्तं मारयेत् त्रिदशानपि ।
मारयेदसुरान् क्रुद्धो यदि रक्षासुरक्षितः ॥
मारयेद्धोमयेत् तां तु आहुत्यन्ते तु भैरवम् ।
विनाप्ययुतहोमेन स्नायुशेषो भवेद् रिपुः ॥
श्मशाने सिध्यति ह्येतद् यस्मात् कर्म सुदारुणम् ।

मन्त्रः

चितिभस्म तथा गृह्य पादपांसुं तथैव च ॥
माषाष्टकेन संयुक्तां कुर्यात् पुत्तलिकां नरः ।
आर्द्रा च भरणी चैव तिस्रः पूर्वास्तथैव च ॥
एते पुत्तलिकायोगा अन्येषां नैव योग्यता ।
प्रादेशमात्राः कर्तव्याश्छागरक्तेन स्नापयेत् ॥
रक्तपुष्पं तथा धूपो रक्तो देयो बलिस्तथा ।
एतं त्रिसप्तवर्णेन सप्तरात्रं प्रपूजयेत् ॥
ततोऽन्ते सप्तरात्रस्य दक्षिणायां दिशि स्थितः ।
चुल्ल्या निवापयेत् प्राज्ञो मन्त्रराजं च षड्जपम् ॥
ततोऽग्निवर्णा विकटा जायन्ते तस्य निग्रहे ।
तोयमध्ये तदाक्षिप्य शोषं चैव न संशयः ॥
गृहे तालुगतो शोषं दाघं शुक्लस्य मध्यगः ।
अं(ब)रीषे शिरोर्तिः स्याद् गोमये कृतसञ्चयः ॥
उद्धृते चैव मोक्षः स्याद् यदि नेच्छेत मारणम् ।

ओं नमः कृष्णशबलाय ।

अन्यथा क्षिप्रकरणं योगं योगवरं शृणु ॥

सुरा........ कीमां कुर्याद् वश्यं तथा क्रमम् ।
हर्म्योपरिगृहे गोष्ठे यत्र वा जनवर्जिते ॥

देवदारुसमिद्भिर्वा होमयेद् विषमासुरीम् ।
प्रतिमां स्थापयेत् तत्र तादृगिच्छेदवेदना ॥

पानीये सतिले शोषं दाहं प्रस्फोट्य वह्निना ।
क्षीरेण शीर्यते मांसो गृहे ताल्वादिशोषणम् ॥

शुक्तमध्ये तदाधं गोमूत्रे शूलना सह ।
अम्बरीषे शिरोर्तिः स्याद् गोमये कृमिसञ्चयः ॥

उद्धृते कुरुते मोक्षं यदि नेच्छेत्तु मारणम् ।
घृतदुग्धतिलैर्होमाच्छान्तिः स्यात् सर्वकर्मसु ॥

ओं ज्रं श्रं द्रीं ह्रीं शत्रुं नाशय । चीरिकाभ्यन्तरेण विषेण सुशिवा-म्बुना घृष्ट्वा लेखनीय किण्टेभ्येवत् भैरवो गौरी शिवा दूती याम्या ज्वालामुखी ।

यत् पूर्वं द्युतिवर्णान्यं पमेति च पदे तथा ।
उलखीति पदं पश्चात् कालीति + पदं पुनः ॥

विद्युज्जिह्वेति संयोज्यममुकं द्विहनेति च ।
दहेति च पदं द्वेधा उत्सादयपदं द्विधा ॥

दूतीद्वितीयबीजान्तं फट्कारान्तसमन्वितम् ।
चितिस्थं लोष्टकं गृह्य आग्नेये दिग्गतं प्रिये ॥

जपेदष्टशतं मन्त्री नग्नो मुक्तशिखस्तथा ।
स्थापयेत त्रिभुवने पर्वतानपि चालयेत् ॥

ह्रीं धमत चूली कराली विद्युज्जिह्वे अमुकं हन दह उत्सादय हूं फट् । संज्ञा दुर्वचसापौरन्दरमन्दिरे लटीभूतां मलुउबीजविद्धाममुकवचो हनस्व प्रत्येकं नणनीवत् पुटितं स्यात् । वेधय तीक्ष्णाग्रकण्टकैः बीजमावेष्टनीयं रजसा असरिचूर्णस्तथौ सुरायुक्तैः ।

मृत्पुटसम्पुटितोऽयं वेधय तीक्ष्णाग्रकण्टकैर्बीजम् ।
देव्यग्रे भुवि निहितं वागीशस्यापि संहरेद वाचम् ॥

पुच्छान्ते चितिनाग्निना यमदिने मुष्कान्तमध्ये रिपुः
भूयस्ते त्रोम तेजो भुवनं संलिख्यते सप्तधा ।
खण्डश्चापि सप्तधा दिशसपद्दक्षिणां संस्थितः
सव्यपृष्ठं च तथात्र सप्तदिवसान्तो वर्णो मन्त्रनिर्परे ॥

सप्ताहेन रिपुर्ज्वरेण म्रियते सत्यं वदे नानृतं
भूयोभूय निघृष्यते यदि रुषा सप्तत्रयं यावधिः ।
शत्रोर्वाथ बृहस्पतिर्दिनकरं खस्थं च सम्पातयेत्
.......................................... ॥

ओं आमुटे प्रस्राटि सप्तपुटके अमुकस्य अमुकेन सह विद्वेषमुत्पादयोत्पादय । विषच्छागरुधिरश्मशानाङ्गारमृत्तिकां श्मशानादानीयास्थिना लिखेत् काकपक्षलेखिन्या आश्लेषानक्षत्रे नैर्ऋत्यां दिशि यक्षमाणास्यैव होमं दिवसात् सप्तसन्ध्यात्रयं काष्ठं रावरासुद्वयं वा नैर्ऋत्यां दिशि वीक्षमाणा सन्ध्यावेलायां नग्नोन्मुक्तशिखस्तु विषच्छागरुधिरेणालोड्याहुतीनां शतमेकेनवथिकं दद्यात् । देवताध्यानेन चण्डिका चिन्तनीया कुमारीद्वये भोजयेत् विनायकं भजेत् पूर्वसेवा आसनं कृष्णभूर्थकं बहिः प्राणस्थः असितं ध्यानं काञ्चिकेन सहालोड्य सर्वदुःखोपशमनी हस्तस्पर्शदुःखाच्छिन्दन्ति इदं च कपालद्वयलिखितं काकपक्षेण विषरुधिरेण काञ्चिकेनालिख्य श्मशानमृत्तिका अस्थि अङ्गारिका पदपांसु साध्यस्य बाह्ये केशेनावेष्ट्य कुम्भकाराग्निमध्ये क्षेसव्यं पीडार्थं धरण्यां खनित्वा क्षेपणीयं पृष्ठे अग्निं प्रज्वाल्य विषपीडा उत्सादयति । ओं रुद्र शवरि फु फु । एषां प्रदोषे आग्नेयमण्डलमध्ये ध्याये मध्यरात्रौ शय्यामूत्रणंस्तर्तिश्यति ओं नमः परिव्राजकानां तद्यथा कथम ओमि । आत्मीयलिङ्गमभिमन्त्रयेद्वाराभ्यस्तवामहस्तेनावष्टभ्य ततो मैथुनं कुर्याद् वश्यो भवति। पूर्वसेवालोहितपद्मद्वार्तिसिरातैलेन कज्जळमध्ये मातुलुङ्गपञ्चाङ्गं वर्तिमध्ये प्रदीपयेत् ।

एतेनाञ्जितनेत्रस्तु यद् ब्रवीति स पश्यति ।

अत्र मन्त्रः । ओं रक्ते रक्ताङ्गुष्ठे अवतर विद्ये । अनेनाष्टशताभिमन्त्रितेनाङ्गुष्ठे प्रलेपने प्रसेना दृश्यते । ओं दधिविवेकाय अमुकं मे वशमानय हुंफट् । पीठतासिद्धः वचया वशीकरोति ।

प्रियङ्गुरोचनालोध्रं पिप्पल्यथ मनश्शिला ।
अश्वलालासमायुक्तं प्रीतिकारकमुत्तमम् ॥
अनेन तिलकं कृत्वा यावत् पश्यत्यसौ जनम् ।
प्रियो ददाति सर्वेषां दर्शनादेव मानवाः ॥
अग्नीषोमौ समौ कृत्वा शुचिरग्निं प्रपश्यति ।
तत्रस्थस्तु जपेन्मन्त्रं विघ्नैर्नैवाभिभूयते ॥

लापीविविकलास्या यदि जीरेण वेष्टिता तन्तुगुल्गुलु धपश्चित्रस्त्री-कर्षणश्रेष्ठ ओं भैरव भयसन्त्रासनिनत रक्षरक्षनार्थमिह देवियात्वं बलेन बलवति बलायिके त्वां नमस्तेस्तु बलायिकायै अमुकस्य जिह्वां स्तम्भय । पूर्वाषाढ-नक्षत्रं पूर्वामुखं चतुरश्रमण्डले दे पूज्या । अनेन मन्त्रेणार्घ्यपुष्पप्रापणकं विक्षे-पार्थं श्मशानाङ्गारिकैः साध्यं वित्रस्तं जिह्वा निर्गत्वान्यछागजिह्वा तत्पृष्ठे कुम्भके सूचितव्यम् । कुष्ठे प्रदेशे चितिभस्मकण्टकैर्वेष्टयित्वात्मपृष्ठके दातव्यम् । घण्टा-कर्णाय नमः । अनेन मन्त्रेण सप्ताभिमन्त्रितं लोष्टं कृत्वा तेन वृक्षं ताडयेत् ग्रामे प्रविशते लभ्यते पूर्वसेवा । ओं नमो भगवति वामेश्वरि अनुपूर्वे ग्राम-प्रवेशे जपेच्छतमष्टाधिकं भक्तङ्गमिकं लभ्यते । ओं विटिचिटिभाटिलि अने-मान्त्राङ्गुलां काष्ठिकामभिमन्त्र्य कर्णे निक्षिपेत् ग्रामे प्रदेशे अयाचितमन्नं लभते । ओं रक्ते देवदत्ते अवतर उच्छुष्ममातङ्गिनि कृष्णाष्टम्यां शुचौ देशे अष्ट-सहस्रं जपेत् सिद्धा भवति । अङ्गुष्ठमलक्तके विलिप्य कुमारिका शुभाशुभं पश्यति प्रसेनेयम् । ओं नमो भगवते आर्द्रपटेश्वराय अनिले काळिका आर्द्र-जिह्वे चण्डशोषणि रुद्रकापालिनि ज्वालामुखि सप्तजिह्वे सहस्रजिह्वे अमुकं ते पशुं ददामि तस्य जीवितं निकृन्त रुद्राय फट् अघोराय फट् विकलाय फट् चिण्डि चण्डमुखि गच्छ पशुपतिराज्ञापयति श्मशानमध्ये यावत्पटो न शु-ष्यति तावच्छत्रुं मारयति ।

न तिथिर्न च नक्षत्रं नोपवासेन च क्रिया ।
अथ मारयितुर्नाम ग्राह्येच्चितिभस्मना ॥

रुधिराक्तेन जुहुयात् सद्यो म्रियते । वशीकरणे पादपांसु जपेदष्टोत्तरशतं यस्य ददाति सर्वस्य उच्चाटन गौरसर्षपकाकजिह्वामर्कटरोमाणि निम्बपत्रलवण-गोपितं जपेदष्टोत्तरशतं शत्रुद्वारे धूपः अथ श्मशानभस्मना पदमात्रं कृत्वा मध्याह्नं यावदादित्याभिमुखो जप्त्वा श्मशानभस्मभ्यो पटमार्द्रीकृत्य देवाग्रे

जपेदुत्सादयति । ओं मुण्डे महापिशाचि । अहोरात्रोपोषितो जपेत् स्वप्नं कलयति । अमुकमन्त्रं जपस्वेति । ओं ईगिलि पिङ्गिलि । भिक्षायाः प्रथमपिण्डं सप्ताभिमन्त्रितं भूम्यां क्षिपेत् अपरिमितमनुभवति । पूर्वाषाढनक्षत्रे साध्यपादपांसुश्मशानाङ्गारविषराजिकाच्छागरक्तहरिद्रा भौमवारे अथार्द्राभरणीकृत्तिकापूर्वफल्गुन्यां वा शरावद्वये मारणे कपालद्वये वा भौमचण्डकौ तुषके श्मशानाङ्गारकैः श्मशानास्थिभिः पूरणीयौ परस्परं पुटितौ अङ्गाररज्ज्वा अश्ववालरज्ज्वा वा उपरिलिखितद्रव्यलिप्तयोर्बाह्ये वेष्टितव्यौ सन्ध्याकाले रात्रौ बहिःप्राणेन कृत्वा लिखितव्यौ दक्षिणादिङ्मुखः काकपक्षलेखिन्या तयोः पृष्ठौ स्तोकमात्रां मृत्तिकां दत्त्वा मूत्रपुरीषौ कार्यौ तच्च राहुशिरसि शरावलिखिते द्वयीशराव अमु(क्त ? क)स्यवाचं स्तम्भय जिह्वां स्तम्भय अथवा अमुकं मारय अथवामु(क्त ? क)स्यान्नपानं भक्ष पानीयं वा पानं स्तम्भय इति द्विधा लेख्यमाकारे वकारे ल्ग्लौकारेणोभयसंपुटितेनावर्तन्तत्पृष्ठे लिखित्वा ठ तत्पृष्ठेन्द्रपुरं वज्रलाञ्छितं लकारचिह्नितं सपावं सपुटयोर्बाह्ये वज्रपुरं राहुशिरा नाममन्त्रः ॥

पुत्तलिकापञ्चविंशतिका समाप्ता ॥

---

तथा सर्वेषु त्रिष्वपि दोषेषु ज्वरनिमित्तेषु महौषधसूक्ष्मपत्रप(यो ? यः)क्वाथः पूर्ववत् सुखावहः । अस्य च दोषस्य वातिकादिज्वरेषु पृथगपि प्रयोगमिच्छन्त्याचार्या इति युगलकम् ॥

**जळजळहरधम्मासअरोहिणिसुण्ठीउ काढिअजळेण ।**
**पीआउ समत्तजरे हरन्ति उअरग्गिजणणीओ ॥**

**जलजलधरधन्वयाषरोहिणीशुण्ठ्यः क्वथितजलेन ।**
**पीताः समस्तज्वरान् हरन्त्युदराग्निजनन्यः ॥**

बालकमुस्तकदुरालभाकटुनागराणि क्वाथक्रमेण जलसाधितानि पीतानि सन्ति सर्वदोषोद्भवान् व्यस्तसमस्तान् ज्वरान् नाशयन्ति जठराग्निं च दीपयन्तीति ॥

**छिण्णरुहाघणभूणिंब(सुण्ठि)कढिअं जळं जरं हरइ ।**
**घणसुरणिडिङ्गिआहि व मुणाळपाठाजळेहिं व ॥**

छिन्नरुहाघनभूनिम्बशुण्ठीक्वथितं जलं ज्वरं हरति ।
घनसुरनिदिग्धिकाभिर्वा मृणालपाठाजलैर्वा ॥

गुळूचीमुस्तककिराततिक्तकविश्वौषधैः क्वथितं तोयं पीतं सत् ज्वरं हरति । अथवा मुस्तदेवदारुकण्टकारीभिः क्वथितम् अथवा उशीरभङ्गीबालकैः क्वथितम् । क्वाथत्रयस्यास्य बलाबलं विचार्य सर्वज्वरेषु प्रयोग इति ॥ १८३ ॥

**तिहळापडोळजळहरछिण्णरुहाणिंबधणिअकसाओ ।**
**हरइ समत्थे विअणं पीओ महुसक्करासहिओ ॥ १८४ ॥**

त्रिफलापटोलजलधरछिन्नरुहानिम्बधनिककषायः ।
हरति समस्तानपि ज्वरा(न्) पीतो मधुशर्करासहितः ॥

हरीतक्यामलकविभीतकैः तथा पटोलेन कुलकेन तथा गुळूच्या तथा पिचुमन्देन तथा धान्यकाफलैः कृतक्वाथो माक्षिकसितशर्कराभ्यां सह श्रृतशीतं सत् सर्वज्वरान् निवारयतीति ॥ १८४ ॥

**अपहरइ (स)मत्थजरे कुणइ खुहं मम्महं च दीवेइ ।**
**आमळअसिवाचित्तअपिप्पळिचुण्णो समब्भसिओ ॥ १८५ ॥**

अपहरति समस्तज्वरान् करोति क्षुधं मन्मथं च दीपयति ।
आमलकशिवाचित्रकपिप्पलीमूलचूर्णं समभ्यस्तम् ॥

धात्रीफलपथ्याग्निकर्णानां समांशानां चूर्णमभ्यासेनोपयुक्तं सर्वज्वरानरुचिं च क्षपयति, वृषकार्यं च करोतीति ॥ १८५ ॥

**आमळअमळअवाळअ(मुणाळ)पप्पडअघणगुळोईहि ।**
**कढिअजळं स(म)हुसिअ समत्थजरदप्पविद्दवणं ॥ १८६ ॥**

आमलकमलयवालकमृणालपर्पटघनगुळूचीभिः ।
क्वथितजलं समधुसितं समस्तज्वरदर्पविद्रावणम् ॥

धात्रीफलचन्दनवालकफलोशीरतिक्तमुस्तामृताभिः कृतः क्वाथः श्रृतमाक्षिकसितशर्कराभ्यां सहितः सर्वज्वरवेगविद्रा(वण) इति ॥ १८६ ॥

**किरिमाळअधम्मासअवसाणिंबमळअदक्खाहि ।**
**कढिअजळं पि तहच्चिअ हरइ जरं सअळदोसभवं ॥ १८७ ॥**

किरिमालकधन्वयावकवसानिम्बमलयद्राक्षाभिः ।
क्वथितजलमपि तथैव हरति ज्वरं सकलदोषभवम् ॥

आरग्वधदुरालभाटरूषककिराततिक्तकचन्दनमृद्वीकाभिः श्रृतं जलं वैवन्मधुसिताभ्यां सहितं पूर्वोक्तं कार्यं करोतीति ॥ १८७ ॥

**मुत्थापडोळरोहिणिनिहळासुरदारुणिंबरअणीहि ।**
**सळहन्ति सण्णिवाए कसाअमिणमो महावज्जा ॥१८८॥**

मुस्तापटोलरोहिणित्रिफलासुरदारुनिम्बरजनीभिः ।
श्लाघन्ते सन्निपाते कषायमेतं महावैद्याः ॥

घनकूलककटुकापथ्यामलकाक्षदेवदारुपिचुमन्दहरिद्राभिः नवभिः कृतो यो जलकाथः, एनं भिषग्वराः प्रशंसन्ति सन्निपातज्वरघ्नमिति ॥ १८८ ॥

**पुक्खरगळोइणाअरणिडिड्ढिआकढइ तिदोसजरे ।**
**सपवणवळासविअणाखासुब्भअसासपीडसञ्जणणे ॥१८९॥**

पुष्करगलोजिनागरनिदग्धिकाकाथस्त्रिदोषज्वरान् ।
सपवनबलासवेदना(खा? का)सोद्भवस्य श्वासपीडायाश्च ॥

निवृत्तिहेतुभूत इति । पुष्करस्य वाद्याहुमूलस्य तथा शुण्ठ्यास्तथा कण्टकार्याः क्वाथः सन्निपातज्वरे योज्यः । कीदृशी वातश्लेष्मसंयुक्ता या वेदना तया कासोद्भवस्य श्वासपीडायाश्च निवृत्तिहेतुभूत इति ॥ १८९ ॥

**छिण्णुब्भवामहोसहणिडिड्ढिआकाढओ कणासहिओ ।**
**पिज्जन्तो जरपीणसमन्दाणळकाससासमूळहरो ॥ १९०॥**

छिन्नोद्भवामहौषधनिदग्धिकाक्काथः कणासहितः ।
पीयमानो ज्वरपीनसमन्दानलश्वासकासशूलहरः ॥

गुळूचीशुण्ठीकण्टकारीणां सममानः क्वाथः उपरि पिप्पलीचूर्णयुतः पीयमानो ज्वरं प्रतिश्यायमग्निकार्श्यं कासं श्वासं शूलानि च हरतीति ॥१९०॥

**किरिमाळअ(मर?)सुण्ठिसिवाघणपिप्पलिमूळरोहिणि-**
**[कसाओ ।**
**(स)पवणसूळे वि बळासजरहरो दन्तिवाअवरो॥ १९१ ॥**

किरिमालशुण्ठिशिवाघनपिप्पलीमूलरोहिणिकषायः ।
सपवनशूलेऽपि बलासज्वरहरो दन्तीपादवरः ॥

आरग्वधनागरपथ्यामुस्ताग्रन्थिकाक्काथः सर्वेषां चतुर्भागमात्रेण निकुम्भेन संयुक्तः सवातशूलेऽपि आतुरे श्लेष्मप्रधानं ज्वरं हरतीति ॥ १९१ ॥

**किरिमाळअरोहिणिदक्खापप्पडअंचेअइकसाओ ।**
**तण्णाउळाण मुच्छापित्तजरदाहविससमणो ॥ १९२ ॥**

किरिमालरोहिणीद्राक्षापर्पटकचेतकिकषायः ।
तृष्णाकुलानां मूर्च्छापित्तज्वरदाहविषशमनः ॥

आरग्वधशीतकटुकावरतिक्तहरीतकीनां क्वाथः तृषितानां हृद्व्यथाकुलत्वं पित्तज्वरकृतं सन्तापं वमनं च शमयतीति ॥ १९२ ॥

**मळअमुणाळमहोसहमुत्थापप्पडअवाळअसणाहं ।**
**जरतह्णादाहहरं कढिअसिसिरं जळं पीअं ॥ १९३ ॥**

मलयमृणालमहौषधमुस्तापर्पटकबालकसनाथम् ।
ज्वरतृष्णादाहहरं क्वथितशिशिरं जलं पीतम् ॥

श्वेतचन्दनोशीरशुण्ठीघनवरतिक्तकह्रीबेरसंयुक्तं श्रृतशीतलं सलिलं पीतं सज्वरं तृषं दाहमपनयति ॥ १९३ ॥

**पिप्पळिचुण्णो घअमहुविमीसिओ कढिअदुद्धसञ्जुत्तो ।**
**पीओ विसमज्जरकासहिअअरोए विणासेइ ॥ १९४ ॥**

पिप्पलीचूर्णं घृतमधुमिश्रितं क्वथितदुग्धसंयुक्तम् ।
पीतं विषमज्वरकासहृद्रोगान् विनाशयति ॥

मागधिकाचूर्णं सर्पिर्माक्षिकाभ्यां सहितं श्रृतशीतेन गोक्षीरेण सह पीतं विषमज्वरांस्तथा हृद्रोगान् नाशयति । विषमज्वरस्य यावन्तः प्रभेदाः सम्भवन्ति, तेष्वयं प्रतिपक्षप्रयोगः । भेदाः सततोऽन्येद्युराश्रितस्तृतीयकश्चतुर्थको द्विधेति पञ्च विषमज्वरभेदाः । वैषम्यं च उद्भवति चिकित्साकालवैषम्यात् । तेषामुत्तरत्राहोरात्रे मध्ये द्वौ वारौ यो भवति सतता सततं एकवार्यो भवति सोऽन्येद्युराश्रितः । एकाहान्तरितस्तृतीयकः । दिनमेकं भूत्वा दिनद्वयं न भवति पुनश्चतुर्थे प्रवर्तत इति । तद्विपर्ययो दिनद्वयं भूत्वा एके दिने भवति, पुनश्चतुर्थे प्रवर्तत इति । सर्वेषु व्याधिषु निदानादिपञ्चकं देशकालप्रवृत्त्या दिनादिविकारं च कृत्वा प्रयोगाः प्रयोक्तव्या इति ॥ १९४ ॥

**गोमयरसंजुत्तं विसमज्जरपीडिआण गोदुद्धं ।**
**सुण्ठीसहिअं व कढिअं छाअच्छीरं सुहं देइ ॥ १९५ ॥**

गो(म)यरससंयुक्तं विषमज्वरपीडितानां गोदुग्धम् ।
शुण्ठीसहितं वा क्वथितं छागक्षीरं सुखं ददाति ॥

गोक्षीरं क्वथितं त्रिभागमात्रेण गोशकृद्रसेन पश्चात् संयुक्तमुक्तप्रभेदैः सर्वशीतज्वरैः कदर्थितानां पीतं स्वास्थ्यं करोति । अथवा नागरेण सहितमजापयः क्वथितं वा तावदेवं करोति इति ॥ १९५ ॥

**मोत्थाविहईफळसेन्धवेमहुअनिआसणाहेहि ।**
**वच्च(इ) बलिआ वि खअं णिद्दाणे सेसेविइणेहि ॥ १९६ ॥**

मुस्तबृहतीफलसैन्धवमधुयष्टिसनाथैः ।
व्रजति बलवत्यपि क्षयं निद्रा नस्यैव तिलैरेतैः ॥

सतैलैर्भावनैर्दत्तैः सुसिर्घनापि नश्यति । कैः मुस्तेन तथा कण्टकारिकाफलेन तथा सैन्धवलवणेन तथा मधुयष्ट्या एतैः समांशैरिति ॥ १९६ ॥

**मरिअतुरंगमळाळापसूअसारञ्जणं पणासेइ ।**
**वाअसजंघाजडिआ जणेइ सिरसण्ठआ णिद्दं ॥ १९७ ॥**

मरिचतुरङ्गमलालाप्रसूनसाराञ्जनं विनाशयति ।
वायसजङ्घाजटिका जनयति शिरःसंस्थिता निद्राम् ॥

ऊषणमश्वमुखनिष्यन्दो माक्षिकं चेत्येतैः कृतमञ्जनं नेत्रन्यस्तं निद्रां निवर्तयति । कालजङ्घामूलं तु मूर्ध्नि निबद्धं नष्टां निद्रामुत्पादयतीति ॥ १९७ ॥

**तेळळं सज्जरसम्मिळपरिविक्कमथोअसिसिरजळमळिअं ।**
**जरदाहपवणसोणिअतावहरं ळेहमत्तेण ॥ १९८ ॥**

तैलं सर्जरसाम्लं परिपक्वमस्तोकशिशिरजलमलितम् ।
ज्वरदाहपवनशोणिततापहरं लेपमात्रेण ॥

राळागर्भेण काञ्चिकेन यथोक्तमात्रया पक्वं सत् तैलं पश्चादतिशीतलेन बहुनोदकेन निर्मथितं लेपेनोपयुक्तमेव ज्वरकृतं च वातकृतं च तापं हरतीति ॥ १९८ ॥

**चुण्णीकअजवकुडअड्ढरत्तवळळीवळद्धसञ्जुत्तं ।**
**तेळळस्स पत्थमेक्कं सअगुणतुससाळिळसंसिद्धं ॥ १९९ ॥**

**एअ जरदारुणदाहप्पसमण तुहिणकिरणपडिरूअं ।**
**तेळ्ळमुपयुज्जमाणं पहरिसजणणञ्च अंगाणं ॥ २०० ॥**

चूर्णीकृतयवकुटचा(के?)र्धरक्तवल्लीपलार्धसंयुक्तम् ।
तैलस्य प्रस्थमेकं शतगुणतुषसलिलसंयुक्तम् ॥

एतद् ज्वर(दारुण)दाहप्रशमनं तुहिनकिरणप्रतिरूपम् ।
तैलमुपयुज्यमानं महर्षजननं चाङ्गानाम् ॥

इदं तैलमभ्यङ्गेनोपयुज्यमानं ज्वरकृतं दारुणं दाहं प्रशमयति । गात्राणि महा(द)यत्यत एव शशिकरसदृशम् । कीदृशं चूर्णम् । इन्द्रेव चूर्णस्य कुटचार्ध(फ?प)लद्वयं तथा मञ्जिष्ठाया अर्धपलम् एतद् गर्भीकृत्य द्वात्रिंशत्पलपरिमाणं तैलं शतगुणेन काञ्चिकेन सिद्धमिति युगलकम् ॥ १९९,२०० ॥

**भळ्ळाअअपिप्पळीमूळपिप्पळीकाढअं पिअन्तस्स ।**
**जूआरसिरिव्विअ ऊरुत्थंभं ण सण्ठाइ ॥ २०१ ॥**

भल्लातकपिप्पलीमूलपिप्पलीकाथं पिबतः ।
द्यूतकारश्रीरिव ऊरुस्तम्भो न सन्तिष्ठते ॥

अरुष्करग्रन्थिकमागधिकाभिः सिद्धं काथं पानेनाभ्यवहरतः ऊरुस्तम्भाख्यो व्याधिः शीघ्रं नश्यति । उपमानं गतार्थमिति ॥ २०१ ॥

**मूलकबीएहि समं अस्सगन्धा रप्फमट्टिआसहिआ ।**
**ळेवं मळअविहिणा ऊरुत्थम्भं समं णेइ ॥ २०२ ॥**

मूलकबीजैः सममश्वगन्धा वल्मीकमृत्तिकासहिता ।
लेपो मदनविधिनोरुस्तम्भं शमं नयति ॥

मूलकस्य महाकन्दस्य बीजैः सह वाजिगन्धा वल्मीकमृदा सहिता । त्रीणि समांशानीत्यर्थः । सा जलेन सह लेपोद्वर्तनकर्मणा ऊरुस्तम्भं शमं नयति इति ॥ २०२ ॥

**अइगुरुणिंबमूळं सीअळजळवट्टिअं पिअन्तस्स ।**
**विहडइ रंघणि(व?वा)ओ वसणे अकुळीणामित्तोव्व ॥ २०३ ॥**

**अद्दद्दकअरमूळं पिट्टं तक्केण पीअमवहरइ ।**
**सेहालिआदळेहिँ व काढिअजळं रंवणीवाअं ॥ २०४ ॥**

**अतिगुरुनिम्बमूलं शीतलजलवर्तितं पिबतः ।**
**विघटयते रङ्कणिवातो व्यसनेऽकुलीनभृत्य इव ॥**

**आद्रार्द्रकतरमूलं पिष्टं तक्रेण पीतमपहरति ।**
**शेफालिकादलैर्वा क्वथितजलं रङ्कणीवातम् ॥**

पिचुमन्दवृक्षस्य मूलं महदेव शिशिरोदकेन सह पिष्टं तेनैव सह क्वथितजलै रङ्कनिवातमतिसरसस्य विकुटितमूलं गोरसेन सह पिष्टं तेनैव सह प्रतिदिवसं पीतं पूर्वोक्तं व्याधिं शमयति । अथवा शेफालिकायाम्ताम्रवृतायाः पल्लवैः पानेनोपयुक्तमेतदेव कार्यं करोति । पानेनोपयुञ्जानस्याहुरस्य रङ्कण्योर्जङ्घयोर्वातो गच्छत्युपमानं व्यक्तार्थमिति ॥ २०३, २०४ ॥

**अण्णेण समं खअल्ळआ पीआ वा पिसिअरससञ्जुत्ता ।**
**अपहरइ अट्ठिभंगं पवणश्च सिआळमेहळिआ ॥ २०५ ॥**

**अन्नेन समं खादिता पीता वा पिशितरससंयुक्ता ।**
**अपहरत्यस्थिभङ्गं पवनं च सृगालमेखलिका ॥**

अस्थिसहारावरनाम्नः ओदनेन सह व्यञ्जनीकृत्य भुक्तमांसरसेन सह क्वथिता पीता वा भग्नमस्थि रोहयति ! व्याधिं विनाशयति ॥ २०५ ॥

**घअमीसिअमसिणसत्तुअछाअच्छीरेण ळित्तमत्ताण ।**
**सम्मळिळेवेणं वा णासइ चळणाण सन्तावो ॥ २०६ ॥**

**घृतमिश्रमसृणसक्तुकच्छागक्षीरेण लिप्तमात्रयोः ।**
**शल्मलिलेपेन वा नश्यति चरणयोः सन्तापः ॥**

गव्यघृतेन मलिताः सूक्ष्माः यवसक्तवो यस्मिन् तादृशेन अजापयसा लेपसमकालमेव पादयोर्वातरक्तादिजनितो दाहः शमयतीति । अथवा शल्मल्याः कारयत्या जलेन पिष्टया त्वचा लेपेनैतत् कार्यं स्यादिति ॥ २०६ ॥

**गुळगेरुअपुरराळासिन्धवमहुमअणघअकआळेवा ।**
**पुट्टावि होन्ति पतीअ कमळोअरकोमळा चरणा ॥ २०७॥**

**गुळगैरिकपुरराळासैन्धवमधुमदनघृतकृतालेपौ ।**
**स्फुटितावपि भवतः प्रतीहि कमलोदरकोमलौ चरणौ ॥**

गुळेन तथा गैरिकेण तथा गिरिमृदाख्येन धातुविशेषेण तथा गुग्गुलुना सर्जरसेन तथा सैन्धवलवणेन तथा माक्षिकेण तथा गोघृतेन च एतैस्तुल्यै-श्चूर्णद्रव्यैर्द्रवद्रव्यलेपैः कृतैः कृतोऽभ्यङ्गो ययोस्तादृशौ पादौ स्फुटितावपि पादिकादूषितावपि पद्मगर्भसुकुमारौ सम्पद्येतामिति ॥ २०७॥

**विअरालिअघरकुमरीदळद्धबद्धाण तइअदिअहम्मि ।**
**उद्देसोवि वि हु कहकहवि णज्जए चम्मकीळाण ॥ २०८॥**

**विदारितगृहकुमारीदलार्धबद्धानां तृतीयदिवसे ।**
**उद्देशोऽपि खलु कथं कथमपि न ज्ञायते चर्मकीलानाम् ॥**

घरकुमार्या हठकुमार्याः पत्रेण विदलीकृत्य प्रच्छाद्य ग्रथितानां पादादिजातानां कठिनग्रन्थिरूपाणां व्याधिविशेषाणां चर्मकीलसंज्ञानां संबन्धा-दनन्तरं तृतीये वधं नाम विनाशं सम्पद्यते यत्तु दीयते तद्देशः उत्पत्ति-स्थानमेव क्लेशेन ज्ञायत एतेन च सूक्ष्ममध्यसूक्ष्मरूपा जतुमणिचर्मकीला-मशसंज्ञा प्रसिद्धा व्याधयस्त्रिविधा अप्यनेन योगेन वक्ष्यमाणानि रत्यैर्वास सर्वे विनश्यति अर्दकीलादिसंज्ञाग्रहणम् उपलक्षणार्थमिति (?) ॥ २०८ ॥

**घट्टा वणदक्खाकन्दएण मळिद्ददळेहि वा तीए ।**
**णिपडन्ति चम्मकीळा सारिअड्डाविडाविव्व पूरेण ॥ २०९ ॥**

**घृष्टा वनद्राक्षाकन्देन मिळिता दळैर्वा तस्याः ।**
**निपतन्ति चर्मकीलाः सरित्तटविटपिन इव पूरेण ॥**

वनद्राक्षाया गोष्ठाम्लिकायाः मूलेन कृतनिघर्षणास्तस्या एव पत्रैर्वा मृदि-ताः सन्तः पूर्वोक्ताश्चर्मकीला निपतन्ति नदीतीर इव ओघेन वृक्षा इति ॥ २०९ ॥

**पवणारिपळ्ळवछेअगळिअचुण्णअणिहंससिढिलंगा ।**
**बहुळसमुग्ग(अ)रुहिरो सूर व्व रणे मसो पडइ ॥ २१० ॥**

**पवनारिपल्लवच्छेदगृहीतचूर्णकनिघर्षशिथिलाङ्गः ।**
**बहलसमुद्गतरुधिरः शूर इव रणे पतति मशकः ॥**

पवनारेरे(र)ण्डस्य यः पल्लवस्तस्य छेदस्थाने वृन्तसन्धिरूपैर्गृहीतं यच्चूर्णं ताम्बूलरंगतेन यद् घर्षणं तेन मृदूभूतं गात्रं यस्य स तथा अत एव भूरिसमुद्भूतरक्तो मशकाख्यो व्याधिः स्वस्थानात् पतति निवर्तत इत्यर्थः । व्यक्तार्थमुपमानम् ॥ २१० ॥

**णिसिविसिअसज्जिआजलविज्जविअशुडङ्कसंखअवि-**
**[लित्ता ।**
**णस्सन्ति मसा दुग्गचणोळिळआ सज्जणगुण व्व ॥२११॥**

निशोषितसर्जिकाजलनिधावितसुदग्धशङ्खविलिप्ताः ।
नश्यन्ति मशका दौर्गत्यनुन्नाः सज्जनगुणा इव ॥

रात्रिपर्युषितेन स्वर्चिकाक्षारस्य सुवर्चिकायाः कर्षमात्रप्रयुक्तेन पानीयकुडुबमात्रेण प्रशमितपुटपाकदग्धो यः कम्बुस्तेन पिष्टेन सता दत्तलेपाः सन्तः प्रागु(सा? क्ता) मशका अभावं यान्ति दारिद्र्ये ग्रस्ता यथा साधुगुणाः श्रुतशमादय इति ॥ २११ ॥

**आदीविअपळहिकिळिव्वोअग्ग अंगारसेइआ बहुसो ।**
**पडइ मसा अहिकञ्चुअघट्टे वा तम्मि कोहविए ॥ ११२॥**

**आदीपितकार्पासद्धक्ष्मदार्वग्राङ्गारस्वेदितो बहुशः ।**
**(पतति)अहिकञ्चुकघृष्टो वा तस्मिन् रुषिते ॥**

कार्पासलतायाः सम्बन्धिनोऽग्निदग्धो यः प्रान्तः तद्गतेन स्फुलिङ्गेन तेन पुनः पुनस्तापनाज्जनितस्वेदस्य दशो नश्यति । अथवा सर्पनिर्मोकेन पुटपाकदग्धेन कृतनिघर्षणं तद्रस क्लेशमापन्ने निपततीति ॥ २१२ ॥

**जीरअपिक्कं पच्छा सित्थअसज्जरसमीसिअं हरइ ।**
**घअमब्भंगेण हुआसडड्डदुक्खं माट्ठेण ॥ २१३ ॥**

**जीरकपक्कं पश्चात् सिक्थकसर्जरसमिश्रितं हरति ।**
**घृतमभ्यङ्गेन हुताशदग्धेन दुःखं क्षणार्धेन ॥**

अजाज्यसिद्धं घृतं कृत्वा मधूच्छिष्टेन राळ्या च घृतपले प्रत्येकतोऽक्षमिति मात्रया मिश्रितं संलेपनोपयुक्तमग्निदग्धं तत्कालमेव शमयति । अत्र साधनं पूर्वोक्तं द्विपलं पानीयपलषोडशं घृतपलचतुष्टयं युगपत् क्वाथयित्वा

**तिळतेल्लडड्ढजवमिसिविलित्तमइरा विमुक्तसन्दावम् ।**
**सिहिडड्ढं पण्णपइ तत्तेल्लब्भग्गिअं बहुसो ॥ २१४ ॥**

तिलतैलदग्धयवमषीविलिप्तमचिराद् विमुक्तसन्तापम् ।
शिखिदग्धं रोहति तत्तैलाभ्यक्तं बहुशः ॥

तिलतैलमध्यदग्धा त्रिधान्दग्ध्वा(?) कृतया मष्या विलिप्तं सद् अग्निप्लुष्टं तत्कालमेवोपशान्तदाहं तेनैव तैलेन पुनः पुनः कृताभ्यङ्गं निर्व्रणीभवतीति ॥

**माहिसणवणीअं दुद्धपिट्ठतिळमीसिअं समं णेइ ।**
**लेवेण सूणिमं दुद्धरं पि भळ्ळादअप्पभवं ॥ २१५ ॥**

माहिषनवनीतं दुग्धपिष्टतिलमिश्रितं शमं नयति ।
लेपेन स्वं(?) दुर्धरमपि भल्लातकप्रभवम् ॥

महिषीनवनी(तेन ? तं) महिषीक्षीरसञ्चूर्णिततिलसहितं लेपेन अरुष्कर-फलभोजनस्पर्शनादिना जीनच्छ्वेथुं (?) घोरमपि शमयतीति ॥ २१५ ॥

**सहसच्चिअ घअघणसारपूरिओ धवळपट्टअणिबन्धो ।**
**अप्पत्तपाअधिअणो रुब्भइ सत्थुब्भवो पहरो ॥ २१६ ॥**

सहसैव घृतघनसारपूरितो धवळपट्टकनिबन्धः ।
अप्राप्तपादखदनो रोहति शस्त्रोद्भवः प्रहारः ॥

गोसर्पिषा तथा घनसारेण कर्पूरेण सहसैव लग्नमात्र एव हरितस(?)-खड्गाघातः श्वेतांशुकबद्धपाकमनपेक्ष्यैव तेनैव पट्टिकाबन्धेन निर्व्रणीभवति । आ सप्ताहात् सद्योव्रणोक्ता चिकित्सा शस्त्रक्षते कर्तव्या । सप्ता(हा)दूर्ध्वं त्व-न्येति ॥ २१६ ॥

**रोहेइ दहणळ्विअसरपुंखामूळिआरसो पहरं ।**
**महिसीसुअपढमपुरीसमसिणचुण्णं व णिमिसेण ॥ २१७ ॥**

रोह(य)ति दशनचर्वितशरपुङ्खामूलरसः प्रहारम् ।
महिषीसुतप्रथमपुरीषमसृणचूर्णमिव निमिषेण ॥

शरपुङ्खायाः बाणपुङ्खायाः मूलस्य दन्तचर्वितस्य रसः पूरणात् शस्त्र-घातं रोहयति, यथा तत्कालप्रसूतस्य महिषीवत्सस्यागृहीतग्रासस्य प्रथमप्रवृत्त-शकृत् तस्य शुष्कस्य सम्बन्धी चूर्णो रोहयतीत्युपमानद्वारेण द्वितीयः प्रयोग इति ॥ २१७ ॥

हरिओ रित्थिअ हरिओ महएविरमेण बद्धअणिबद्धो ।
अहिणवप्पहारो रोहं पचइ तेणेअ बन्धेण ॥ २१८ ॥

हरितो रिक्तीकृत्य भरितः महदेवीरसेन पट्टकनिबद्धः ।
अभिनवप्रहारो रोहं व्रजति तेनैव बन्धेन ॥

सहदेवी दण्डोत्पलाख्या ओषधिः, तन्मूलस्य निष्पीडितस्य रसेन प्रथमं पूरितः पुनः रिक्तीकृतः पुनस्तेनैव रसेन पूरितः पश्चाद् बद्धपिटकः सन् तत्काललग्नशस्त्रघातो रोहति तेनैव बन्धेन, द्वितीयं पट्टिकाधारं नापेक्षत इति ॥

एकश्चिअ सरपुङ्खापाढालज्जालुआण जळपिट्ठम् ।
रोहेइ महापहरं पि मूळमोळवमत्तेण ॥ २१९ ॥

एकमेव शरपुङ्खापाठालज्जालुकीनां जलपिष्टम् ।
रोहयति महाप्रहारमपि मूलमालेपमात्रेण ॥

बाणपुङ्खायास्तथा भार्ग्यास्तथा समङ्गायाश्च तिसृणां मध्यादेकस्या एव मूलं सलिलचूर्णितं सलेपेनैव दृढमपि प्रहारमचिरेणैव रोहयतीति ॥ २१९ ॥

रोहेइ वणं विउडेइ वेअणं पूअवाअमवहरइ ।
वाअसजङ्घालेवो तिरत्तमत्तं कओ पहरे ॥ २२० ॥

रोहयति व्रणं विघटयति वेदनां पूतिपाकमपहरति ।
वायसजङ्घालेपस्त्रिरा(त्रं ? त्रमात्रं) कृ(ते ? तः) प्र(ह ? हा)रे ॥

काकजङ्घायाः पिष्टायाः शस्त्रप्रहारे दत्तो लेपस्त्रिरात्रमात्रेण व्रणं रोहयति । पूतिपाकावस्थामप्राप्तमेव व्रणमाशु रोहयतीत्यर्थः ॥ २२० ॥

कढिअं लज्जिरिआसरसमूळखण्डेहि सञ्जुअं तेळ्ळं ।
रोहेइ सेअविहिणा +++ पाउज्जिअं पहरं ॥ २२१ ॥

कथितं लज्जालुकीसरसमूलखण्डैः संयुक्तं तैलम् ।
रोहयति सेकविधिना पाकोज्झितं प्रहारम् ॥

लज्जालुकी समङ्गा तस्या आर्द्राया मूलानां शकलैः सहितं पक्वं तिलतैलं सेकविधिना अभ्यङ्गकर्मणा घृथा पाकरहितं शस्त्रकृतं व्रणं रोहयति । अत्र तैलपाकविधिर्न विवक्षितः । केवलमूलखण्डानि क्षिप्त्वा तैलं पच्यत इति ॥ २२१ ॥

सलिळमोरन्दअमूळपक्कतिळतेळ्ळकद्धसेआण ।
सहसत्ति दारुणाण वि वणाण विअणा समोसरइ ॥ २२२ ॥

सलिलमयूरकमूलपक्वतिलतैललब्धसेकानाम् ।
सहसातिदारुणानामपि व्रणानां वेदना समपसरति ॥

सलिलैः स्वरसैरार्द्रैरपामार्गमूलैस्तैलपाकविधिना साधितं यत् तिलतैलं तेन प्राप्तः सेको यैस्तादृशानां व्रणानां घोराणामपि आश्वेव वेदनापगच्छतीति ॥ २२२ ॥

**वणद्क्खावणघरकुमरिकन्दझिण्डुअमोरअविपक्कम् ।**
**अपहरइ घअं सेएण सअळपहरुब्भवं दुक्खं ॥ २२३ ॥**

वनद्राक्षावनगृहकुमारीकन्दझिण्डुकमयूरकविपक्वम् ।
अपहरति घृतं सेकेन सकलप्रहारोद्भवं दुःखम् ॥

बनद्राक्षायाः गोषाम्बिकायाः तथा वनकुमार्याः वन्ध्यकार्कोट्याः गृहकुमार्याः फटकुमारीति प्रसिद्धायाश्च मूलैश्च गोपालपीठकेन तथापामार्गेण चैतैः समांशैः कल्कीकृतैः सिद्धं घृतमभ्यञ्जेन सर्वशस्त्रस्याभिघातजं दुःखं निवारयतीति । पाकविधिरत्र शुद्धाम्बुक्रमेण द्रव्येभ्यश्चतुर्गुणः स्नेहस्तच्चतुर्गुणं जलं, सहैव पक्त्वा स्नेहशेषं ग्राह्यमिति ॥ २२३ ॥

**करसम्पुडणिप्पीडिअमोरन्दअओळरसेण दिण्णेण ।**
**पहराहि चिरपअट्टं पि सोणिअं थक्कइ खणेण ॥ २२४ ॥**

(करसम्पुटनिष्पीडितमयूरदलरसेन दत्तेन ।
प्रहारैश्चिरप्रवृत्तमपि शोणितं त्रुट्यति क्षणेन ॥)

करसम्पुटनिष्पीडितानाम् अपामार्गपत्राणां निःष्यन्देन प्रवृत्तेन शस्त्रक्षताद् बहु(ज ? का)लप्रसृतमपि रक्तं तत्कालमेव त्रुट्यतीति ॥ २२४ ॥

**ळंगळिआवच्छळकन्दळेविए (व)णमुहम्मि णीसरइ ।**
**चिरआळपणट्टं पि हु सळ्ळं तेणेअ (णीसरइ ? मग्गेण)**
**[॥ २२५ ॥**

लाङ्गलिकावर्तुलकन्दलिप्ते व्रणमुखे निस्सरति ॥
चिरकालप्रणष्टमपि (खलु) शल्यं तेनैव मार्गेण ॥

लाङ्गलिका हलिनी तस्या वृत्तरूपेणादीर्घेण मूलेन जलपिष्टेन कृताभ्यङ्गे शस्त्रक्षतास्ये बहुकालमदृश्यमानमपि शस्त्रशकलादिरूपं शल्यं येनैव मार्गेण प्रविष्टं तेनैव निष्क्रामतीति ॥ २२५ ॥

अळवट्टिउट्टवारुणिमूलं (मूलं) व मेससिंगीए ।
वणपेरन्तालेवेण णट्टसल्लं समुद्धरइ ॥ २२६ ॥

जलवर्तितोष्ट्रवारुणीमूलं मूलं वा मेषशृङ्ग्याः ।
व्रणपर्यन्तालेपेन नष्टशल्यं समुद्धरति ॥

उष्ट्रवारुण्याः करभवारुण्याः मूलं जलपिष्टं श(स्तं ? स्त)क्षताभ्यङ्गेनादृश्यं शल्यमाकर्षयति, अथवा मेषशृङ्ग्या अजशृङ्ग्या मूलमिति ॥ २२६ ॥

आअल्लिअमूळरअणीण खण्डखण्डेहि कढिअं तेल्लं ।
पूरणमत्तेणच्चिअ णासे(इ) चिरब्भवं णाडिं ॥ २२७ ॥

आअल्लिअमूलरजन्योः खण्डखण्डैः क्वथितं तैलम् ।
पूरणमात्रेणैव नाशयति चिरकालोद्भवां नालीम् ॥

आअल्ली निष्पर्याया देशविशेषप्रसिद्धा या, तस्या मूलं तथा रजनी पिण्डहरिद्रा तयोः शकलशकलैः क्वथितं तैलं व्रणस्य पूरणमात्रेणैव कालान्तरप्ररूढां नालीं गतिं रोहयति । तैलस्य मूलखण्डैः सह क्वाथमात्रं विवक्षितं, न (त ? तु) पाकविधिरिति ॥ २२७ ॥

माहिसदधिकुद्दवकूरमीसिअं हरइ चिरपरूढं पि ।
खइअं कंगुणिआमूलचुण्णमइदारुणं णाडिं ॥ २२८ ॥

माहिषदधिकोद्रवान्नमिश्रितं हरति चिरप्ररूढमपि ।
खादितं कङ्गुनीकामूल(चूर्ण)मतिदारुणां नालीम् ॥

कङ्गुनिका निष्पर्याया ओषधिस्तस्या मूलचूर्णं कोद्रवस्य कोरदूषस्य तृणधान्यविशेषस्यान्नेन महिषीदधिसंयुक्तेन सह भुक्तं चिरप्रवृत्तामपि घोरां व्रणस्य गतिं शमयतीति ॥ २२८ ॥

समतुलिअपुडपईविअतालवणणाअमूलमसीभरिआ ।
णासइ णाडी दुट्ठं च दूसहं चिरपरूढं पि ॥ २२९ ॥

समतुलितपुटप्रदीपिततालवननागमूलमषीभरिता ।
नश्यति नाली दुष्टं च दुःसहं चिरप्ररूढमपि ॥

तुल्यांशैर्मितस्यान्तर्धूमदग्धस्य हरितालस्य तण्डुलीयकमूलस्य मष्या पूरिता नाली व्रणगतिः प्ररोहति । दुष्टं च व्रणं चिरकालप्रस्थितमसह्यवेदनमपि निवर्तते पूरणादेवेति ॥ २२९ ॥

**हेहंसोसुब्भवरत्तमण्डलं सिसिरसलिलपिट्ठेण।**
**उवसमइ क्खणच्चिअ दिअतरुफळलेवमत्तेण ॥ २३० ॥**

फे(न)निकर्षोद्भवरक्तमण्डलं शिशिरसलिलपिष्टेन।
उपशाम्यति तत्क्षणमेव (जितस्त ? द्विजत)रुफललेपमात्रेण ॥

समुद्रफेननिकर्षणवशाज्जङ्घादिगात्रेषु यद् रक्तमण्डलमण्डलं दूषितरुधिरबिम्बमुत्पद्यते तद् द्विजतरोः पलाशवृक्षस्य फलैः शीताम्बुपिष्टैर्लिप्तमात्रेण निवर्तत इति ॥ २३० ॥

**सरळरुहिरोळ(अ ?)गन्धअविडंगजवहूइसुण्ठिळेवेण।**
**विद्दवइ अब्बुदं रविमऊहच्छिक्कं व हिमखण्डं ॥ २३१ ॥**

सरलरुधिरार्द्रगन्धकविलङ्गयवभूतिशुण्ठिलेपेन।
विद्रवत्यर्बुदं रविमयूखस्पृष्टमिव हिमखण्डम् ॥

कृकलासस्य रक्तेनार्द्रीकृतं यद् गन्धपाषाणस्य चूर्णं तथा कृमिघ्नबीजानि तथा यवक्षारं तथा नागरमेतैर्मिश्रितैः कृतेन लेपेन शोफविकारोऽर्बुदाख्यो व्याधिर्नश्यति। आशु निवृत्तावुपमानं स्पष्टमिति ॥ २३१ ॥

**सोम्मदिसासंभूअं विहिगहिअं हरइ ळेवमत्तेण।**
**दढगण्ठि(अ?)गण्डमाळब्बुआइ उत्तण्टईमूळं ॥ २३२ ॥**

सोमदिक्संभूतं विधिगृहीतं हरति लेपमात्रेण।
दृढग्रन्थिगण्डमालार्बुदान्युत्तण्टकीमूलम् ॥

उत्तण्टकी निष्पर्याया, तस्या उत्तराशाभिमुखत्वेन जातं मूलं विधिना वनप्रवेशोचितेन संयमेन स्वीकृतं जलपिष्टं लेपमात्रेणैतान् विकारान् विनाशयति। तत्र ग्रन्थिरर्बुदापेक्षया सूक्ष्मः किन्त्वसमा (?)। बहूनि गण्डानि गण्डमाला अर्बुदमुक्तलक्षणमिति ॥ २३२ ॥

**अअम्मिसमीसिद्धत्थअजवमूळअसिग्गुबीअळेवेण।**
**अंबिळअतक्कपिट्ठे(ण) गण्डगण्डीओ णासन्ति ॥ २३३ ॥**

अतसिशमीसिद्धार्थकयवमूलकशिग्रुबीजलेपेन।
अम्लतक्रपिष्टेन गण्डग्रन्थयो नश्यन्ति ॥

अतसी भङ्गा, शमी पवित्रपत्रा, तथा गौरसर्षपस्तथा यवमहाकन्दा, तथा श्वेतमरिचमेनद्धीजेरचुकर्गोरमपिष्टः कृतेन लेपेन गण्डानि ग्रन्थयश्च नश्यन्तीति ॥ २३३ ॥

**क्खणमत्तेण विलिज्जइ वणकिणगण्डी णराण कठिणो वि।**
**णिअजणणिवाहकीडअपिच्छिल्लपलेविओ णिउणं॥२३४॥**

क्षणमात्रेण विलीयते व्रणकिणग्रन्थिर्नराणां कठिनोऽपि।
निजजननिवाहकीटापिच्छिल्ललिप्तो निपुणम् ॥

निजजननिवाहाख्यः कीटोऽर्कशलभ इति प्रसिद्धस्तस्याच्छादिय पिच्छिलं सरसं (?) वस्त्रान्तेन प्रलिप्तो व्रणानां किणस्य रूढव्रणनाशस्योपरि ग्रन्थिः कठिनो विकारस्तत्कालमेव निश्शेषं गलतीति ॥ २३४ ॥

**उल्लंबिअणरगीवापासमसी सिसिरसलिलसञ्जुत्ता।**
**पीआपस्मारं हरइ दुट्ठघरिणिव्व घरसारं॥ २३५ ॥**

उलम्बितनरग्रीवापाशमषी शिशिरसलिलसंयुक्ता।
पीतापस्मारं हरति दुष्टगृहिणीव गृहसारम् ॥

उद्बद्धस्य पुंसो ग्रीवापाशस्य (घ? पु)टपाकदग्धस्य यद् भस्म तच्छीताम्बुना सह पीतमपस्मृतिं विनाशयति। उपमानं गतार्थमिति ॥ २३५ ॥

**वरसलिलपिट्ठसेआपराइआसलिलणा(स?म)णं सघअं।**
**भूअग्गहविद्दवणं समिरिअमुणिकुसुमसलिलं व॥ २३६ ॥**

वरसलिलपिष्टश्वेतापराजितासलिलनावनं सघृतम्।
भूतग्रहविद्रावणं समरिचमुनिकुसुमसलिलं वा ॥

तण्डुलोदकपिष्टश्वेतगिरिकर्णिकामूलं घृतसहितं नस्येनोपयुक्तं भूतानां पिशाचादीनां ग्रहाणामपस्मारादीनां विनाशनम्। अथवा कटुकसमभागः अगस्त्यतरुपुष्पाणां रस एवमेवोपयुक्त इति ॥ २३६ ॥

**हिङ्गुवआसिद्धत्थअणिंबदलभुअंगकत्तिणिम्मविओ।**
**झामामोहिअमोक्खं करेइ सिद्धो महाधूवो॥ २३७ ॥**

**हिङ्गुवचासिद्धार्थकनिम्बदलभुजङ्गकृत्तिनिर्मित(म् ? :) ।**
**लामामुद्रितमोक्षं करोति सिद्धो महाधूपः ॥**

वाल्हीकोग्रगन्धागौरसर्षपपिचुमन्दपत्रैः सर्पकञ्चुकैः सम्पादित उत्कृष्टो धूपो द्रागित्यधिष्ठितानां मोक्षं ततः परित्यागं करोतीति ॥ २३७ ॥

**पक्कं गोजळवसिअं फळं विसाळाए णासणं दिण्णं ।**
**णासेइ बम्भरक्खसमण्णे वि गहे सुदुव्वारे ॥ २३८ ॥**

**पक्कं गोजलोषितं फलं विशालाया नावनं दत्तम् ।**
**नाशयति ब्रह्मराक्षसमन्यांश्च ग्रहान् सुदुर्वारान् ॥**

गोमूत्रपर्युषितं पूर्णं फलं पक्कमिन्द्रवारुण्या निष्पीड्य नस्येनोपयुक्तं ब्रह्मराक्षसाख्यमहाग्रहमन्यानप्यपस्मारादीन् दुष्करनिवारणान् महाग्रहान् नाशयतीति ॥ २३८ ॥

**मागहिआसेन्धवसुरहिपित्तमहुमरिअरइअमइपअडं ।**
**भूअहरमञ्जणमिणं दुद्धरगहदप्पविद्दवणं ॥ २३९ ॥**

**मागधिकासैन्धवसुरभिपित्तमधुमरिचरचितमतिप्रकटम् ।**
**भूतहरमञ्जनमिदं दुर्द्धरग्रहदर्पविद्रावणम् ॥**

उपकुल्यासैन्धवलवणगोपित्तक्षौद्रोषणैः सम्पादितं सुलभद्रव्यसाध्यत्वादत्यन्तस्फुटमिदमञ्जनं भूतदोषनाशनं, तथा दुर्वारबलानां ब्रह्मराक्षसादिग्रहाणां मदविद्रावणमिति ॥ २३९ ॥

**दारुहरिदं पूसे पूसफळरसेण वट्टिआ रइआ ।**
**अञ्जणगुणिआ गहवन्दवन्दिआ भूअविद्दवणी ॥ २४० ॥**

**दारुहरि(द्रां ? द्रा) पुष्ये पुष्यफलरसेन वर्तिता रचिता ।**
**अञ्जनगुलिका ग्रहवृन्दवन्दिता भूतविद्रावणी ॥**

दारुहरिद्रां पिष्ट्वा कूश्माण्डरसेनालोड्य पुष्यनक्षत्रे सम्पादिताञ्जनार्थं गुलिकाञ्जनेनोपयुक्ता सर्वदुष्टग्रहैर्भीतैः सद्भिः स्तुता सर्वदुष्टभूतानां व्यपसारिणी, सर्वग्रहभूतनिवारणीत्यर्थः ॥ २४० ॥

कसणांबरगाढणिअन्धसपुरकाआगिणिन्दधूवेण ।
रविअ(र)छिक्कोन्व नमो णासइ चाउत्थओ दूरं ॥ २४१ ॥

कृष्णाम्बरदृढग्रथितमपुरकाकारिपिच्छधूपेन ।
रविकरस्पृष्टमिव तमो नश्यति चातुर्थको दूरम् ॥

कृष्णखर्परखण्डे निविडं कृत्वा ग्रथिता ये महिषाक्षसहिताः कौशिक-पक्षास्तैः सर्वैर्दग्धैर्जनितेन धूपेन चातुर्थकज्वरो नश्यति ॥ २४१ ॥

जो पिअइ पूसदिअहे जलपिट्टं सिअपुणण्णवामूलं ।
पासे वि णहु विअरन्ति तस्स अहिविच्छुआ वरिसं ॥ २४२ ॥

यः पिबति पुष्यदिवसे जलपिष्टं सितपुनर्नवामूलम् ।
पार्श्वेऽपि न खलु विचरन्ति तस्याहिवृश्चिका वर्षम् ॥

यस्तोयसञ्चूर्णितं श्वेतवर्षाभूमूलं पिबति, तस्य संवत्सरं यावत् सर्प-वृश्चिकाः समीपेऽपि न गच्छन्तीति ॥ २४२ ॥

जो विणअतणअपडिमं तरच्छदढदसणविरइअं वहइ ।
ओजग्गिउं ण तीरइ भीमेहि वि सो भुअंगेहि ॥ २४३ ॥

यो विनतातनयप्रतिमां तरक्षुदृढदशनविरचितां वहति ।
अभिभवितुमपि न पार्यते भीमैरपि स भुजङ्गमैः ॥

यस्तरक्षोः श्वापदविशेषस्य ऋक्षाख्यस्य सम्बन्धिन्या दंष्ट्रया दृढद-शनया निर्मितां गरुडमूर्तिं कण्ठादौ धारयति, अशनिदारुणैरप्युरगैराक्रमितुं न स शक्य इति ॥ २४३ ॥

छम्मासमही ण डसइ पूसे पीएण गरुळिमूळेण ।
अह डसइ कह वि पुरिसं ता मरइ खणद्धमत्तेण ॥ २४४ ॥

षण्मासानहिर्न दशति पुष्ये पीतेन गरुळिमूलेन ।
अथ दशति कथमपि पुरुषं तदा म्रियते क्षणार्धमात्रेण ॥

गरुली रक्तपुष्पा पुनर्नवा तन्मूलेन जलपीतेन मासषट्कं सर्पः पुरुषं न दशति । यदि वा कथञ्चिद् दशति तदासौ सर्पस्तत्कालमेव म्रियत इति ॥ २४४ ॥

**पाणञ्जणलेवणणावणेहि (क?त)च्चिअ विअं समुप्पसइ।**
**डक्कस्स गरुळमूळं जइ हट्ठमसामळं होइ ॥ २४५ ॥**

पानाञ्जनलेपननावनैस्तदेव विषं समुत्पुंसयति।
दष्टस्य गरुलिमूलं यदि घृष्ट(म)श्यामलं भवति ॥

तदेव गरुल्याः पुनर्नवाया मूलं पानाञ्जनलेपननस्यैः प्रयुक्तं दष्टस्य विषमशेषं नाशयति। यदि तन्मूलं निघृष्टं सत् कृष्णवर्णं न भवति। श्वेतवर्णं तत्कार्यं करोतीत्यर्थः ॥ २४५ ॥

**ळित्त(क?)करो बद्धेण (व) ळज्जामूळेण णिअसरीरम्मि।**
**उग्गाहेइ भुअंगे गरुडव्व णरो णिरासंको ॥ २४६ ॥**

लिप्तकरो बद्धेन वा लज्जामूलेन निजशरीरे।
उद्ग्राहयति भुजङ्गान् गरुड इव नरो निराशङ्कः ॥

लज्जा समङ्गा तन्मूलेन जलपिष्टेन लिप्तहस्तोऽथवा तेनैव बाह्वादिशरीरैकदेशबद्धेन वैनतेय इव निर्भयः सर्पं गृह्णातीति ॥ २४६ ॥

**अक्कजडावक्कळमसिणचुण्णमइसिसिर(सळिळ)सञ्जुत्तं।**
**पीअमहिकणअघोणसहआरि(अ)विसाण विद्दवणं ॥२४७॥**

अर्कजटावल्कलमसृणचूर्णमतिशिशिरसलिलसंयुक्तम्।
पीतमहिकनकगोनसहयारि(ज)विषाणां विद्रावणम् ॥

रूपिकामूलस्य त्वचं सूक्ष्मचूर्णीकृतमतिशीतलजलसहितं सत् पानेनोपयुक्तं सर्पधुर्धूरमण्डलिकरवीरजानां विषाणां निवारणमिति ॥ २४७ ॥

**तुससळिळमसिणवट्टिअकाअणिआमूळपाणळेवेण।**
**ओसरइ मण्डळिविसं मारुअविहुअं व घणवन्दं ॥२४८॥**

तुषसलिलमसृणवर्तितकाकनिकामूलपानलेपेन।
अपसरति मण्डलिविषं मारुतविधुतमिव घनवृन्दम् ॥

काञ्जिकसूक्ष्मपिष्टं गुञ्जामूलं तेनैव सह जलेनोपयुक्तम्। गोनासविषमपगच्छति वायुनिर्धूतमभ्रजालं यथेति ॥ २४८ ॥

**तण्डुळजळेण पिट्ठा पीआ घअमीसिआ समुप्पसइ।**
**घणणाअजडा णिम्मिअगरळं अइगरुअवेअं पि ॥ २४९ ॥**

तण्डुलजलेन पिष्टा पीता घृतमिश्रिता समुत्पुंसयति ।
घननादजटा निर्मितगरलमतिगुरुवेगमपि ॥

तण्डुलीयकमूलं तण्डुलधावनसञ्चूर्णितं सद् घृतेन सह पीतं निर्मितं कृत्रिमं विषं तीव्रदर्पमप्यपसारयतीति ॥ २४९ ॥

लज्जालुईए मूलं णीलीमूलं व तण्डुलजलेण ।
मण्डलिविसमइविसमं पि पीअमत्तं णिवारेइ ॥ २५० ॥

लज्जालु(की ? क्या) मूलं नीलीमूलं वा तण्डुलोदकेन ।
मण्डलिविषमतिविषममपि पीतमात्रं निवारयति ॥

समङ्गाया मूलं तण्डुलोदकेन पिष्ट्वा तेनैव पीतं घोरतरमपि गोनासविषं तत्कालमेव नाशयति । अथवा नीलीमूलमेवोपयुक्तमिति ॥ २५० ॥

सगुलो कोहळ(अ)रसो (कमेण) (दु)द्धञ्च सक्करासहिअं ।
पीअमपहरइ मोहं कुद्दवधुदुधूरअप्पहवं ॥ २५१ ॥

सगुलः कोहलकरसः क्रमेण दुग्धं च शर्करासहितम् ।
पीतमपहरति मोहं कोद्रवधुर्धूरकप्रभवम् ॥

कूश्माण्डकरसो गुलसहितः पीतः कोरदूषकभोजननिमित्तं मोहं नाशयति । तथा गोक्षीरं शर्करासंयुक्तं मातुलप्रभवं मोहं नाशयतीति ॥ २५१ ॥

गरुओ वि पोप्फळमओ जविउब्भडपुळअभेअमइमोहो ।
उवसमइ झत्ति सीअळजळेण चुळुएहि पीएण ॥ २५२ ॥

गुरुरपि पूगफलमदो जवितोद्भटपुलकस्वेदमतिमोहः ।
उपशाम्यति झगिति शीतलजलेन चुलुकैः पीतेन ॥

पूगफलेनोद्वेगेन महानपि कृतो मदः स्वेदरोमाञ्चबुद्धिभ्रमसहितः शिशिरोदकेन चुलुकैः पीतेन झगिति निवर्तत इति ॥ २५२ ॥

अवहत्थिअमुहणीसरिअपउळ(ला)ळाजळो समोसरइ ।
पुरुसाण पुप्फळमओ जिवाए अटबिहारे व्व(?) ॥ २५३ ॥

अपहस्तितमुखनिःसृत(बहल)कालाजलः समपसरति ।
पुरुषाणां पूगफलम(दे ? दो) प्रातेऽलवीक्षुम्भोमवे वा ॥

अथवा पूगफलमदः पुंसामरण्यगोशकृच्छकले (जिघ्रि ? घ्रा)ते सति

निवर्तते। कीदृशः सन्। द्रव्यबला(द)निवारित आस्यनिष्क्रान्तो बहलः श्लेष्मनिःष्यन्दो य(ते ? त्र) स तथाविध इति ॥ २५३ ॥

**घअसक्करावलेहं पढमं काऊण पिअइ जो पच्छा।**
**उद्दाममणहरं पि हु तस्स ण (स ? म) ज्जं मअं कुणइ ॥**
**[२५४ ॥**

**घृतशर्करावलेहं प्रथमं कृत्वा पिबति यः पश्चात्।**
**उद्दाममनोहरमपि खलु तस्य (न) म(ध्ये ? द्यं) मदं कुरुते ॥**

यो गोघृतमत्स्य(पि ?)ण्डीतत्सेकाभ्यामपावलीढमुपयुज्य पश्चादुद्दामं बहुप्रगल्भवीर्यं वा मनोहरं हृद्यमपि तस्य तन्मद्यं न विकारं जनयतीति ॥ २५४ ॥

**कसणंकोल्लजडाकाढओ व्व चुण्णं व तिण्णि दिअहाइ।**
**अवहरइ गरविसं दुज्जअं पि पीओ पअत्तेण ॥ २५५ ॥**

**कृष्णाङ्कोलजटाक्वाथो वा चूर्णं वा त्रीणि दिवसानि।**
**अपहरति गरविषं दुर्जयमपि पीतः प्रयत्नेन ॥**

कृष्णस्य हरिविल्लस्य मूलक्वाथचूर्णाभ्यामेकतरो दिनत्रयमुपयुक्तः गरविषं दुष्करमपि कृत्रिमविषं नाशयति ॥ २५५ ॥

**अरुणासिलाभण्टिकरञ्जबीअकुट्ठेहि होइ संकामो।**
**अइविसमस्स वि विच्छअवड्ढमाणविसवेअदुक्खस्स ॥ २५६ ॥**

**कुङ्कुमशिलाभण्टिकरञ्जबीजकुष्ठैर्भवति संक्रामः।**
**अतिविषमस्यापि वृश्चिकवर्धमानविषवेगदुःखस्य ॥**

अरुणशिलाशिरीषनक्तमालबीजवाप्यैस्तुल्यांशैः पानीयेन कृतया गुलिकया दंशस्थाने गाढं व्यवधाय करनदन्तिरादिना (?) न्यस्तया वृश्चिकसम्बन्धिनो वर्धमानविषदर्पक्लेशस्य दुष्करस्यापि तत्र संक्रामो भवति। दष्टः स्वास्थ्यं गच्छत्यतः स्वहस्तेन निरन्तरतया सा तत्र न देयेति ॥ २५६ ॥

**ओआरेइ अहोणीअमुद्धमारोविअं पि वड्ढेइ।**
**डक्कस्स विच्छुअविसं विहिणा वणमज्जुआमूलं ॥ २५७ ॥**

**अवधारयत्यधोनीतमूर्ध्वमारोपि(तं ? तमपि) वर्धयति।**
**दष्टकस्य वृश्चिकविषं विधिना वनमञ्जुकामूलम् ॥**

उन्दुरुदंशसङ्क्रान्तेन विषेण व्याधितस्य संज्ञां गृहीत्वा उन्मूलिता पट्ट-पुल्लिका निष्पर्याया यावत् मत्र्त दूरे परिश्रस्यते अमुकस्य मूषिकविषं नश्य-त्वित्युक्त्वा तावत्कालं जपतस्य (?) विषं निवर्तेत इति ॥ २६५ ॥

**कडुएल्लकोससंजुअधूविअडङ्कस्स णासइ खणेण ।**
**अंकोल्लपत्तधूविअडङ्क(अविस ? स्स वि)मच्छविसवि-[अणा ॥ २६६ ॥**

**कटुतैलकोशसंयुक्तधूपितदंशस्य (नश्यति) क्षणेन ।**
**(अङ्कोलपत्रधूपितदंशस्यापि) मत्स्य(विष)वेदना ॥**

सर्षपतैलेन खलय(?)सक्तुभिर्दत्तधूपः शृङ्गिमत्स्यविषदंशो यस्य तस्य पुरुषस्य तत्कृता व्यथा तत्कालमेव प्रणश्यति । अथवारिकिल्लस्य पल्लवैर्धूपितो दंशो यस्य तस्यापि शृङ्गिमत्स्यविषवेदना तथैव नश्यतीति ॥ २६६ ॥

**उह्णोअअमसिणणिहट्टणामिअं हरइ विसमवेअं पि ।**
**गोहेरअडक्कविसं मूळमहिं(सइ ? साए) णिमिसेण ॥ २६७ ॥**

**उष्णोदकमसृणनिघृष्टनावनं (कृतं ?) हरति विषमवेगमपि ।**
**गोधेरकदंशविषं मूलमहिं(स ? सा)या निमिषेण ॥**

अहिंसाया गृध्रनख्या मूलमुष्णसलिलेन पिष्ट्वा तेनैव सह नस्यं कृतं सद् गोधेरकस्य प्राणिविशेषस्य प्राग्बाहुसंज्ञया प्रसिद्धस्य सम्बन्धिना दंशेन सङ्क्रान्तं विषं क्षणेन नश्यतीति २६७ ॥

**घिअमीसिअचिक्कसपिण्डी सेअविहिणा अणाहि अवणेइ ।**
**सिंगिअमच्छअणिह्णिणा मिअंककन्तिव्व णोसग्गे ॥ २६८ ॥**

**घृतमिश्रितचिक्कसपिण्डी स्वेदविधिना व्रणान्नपनयति ।**
**शृङ्गिमत्स्यवेदना मृगाङ्ककान्तिरिव निशान्ते ॥**

गोघृतेन मिश्रिता अष्टयवचूर्णिपिण्डी स्वेदविधिना शृङ्गयाख्यमीनदंश-सङ्क्रान्तविषव्यथामपसारयति । (अथवा ?) रात्र्यवसाने ज्योत्स्नेवेति ॥ २६८ ॥

**डक्कम्मि लोहघट्टे उद्धरिए कण्टए (व) डक्काहि ।**
**णासइ बरडीए विसं दिण्णाए व फणि(ज्ज)अरसम्मि [॥ २६९ ॥**

**दंशे लोहघृष्टे उद्धृते कण्टके वा दंशे ।**
**नश्यति वरट्या विषं दत्ते (वा) फणिज्जकस्य (रसे) ॥**

मरुबकस्य कुबेरस्य वा (शरे ? रसे) दत्ते सति तद्विषं नश्यतीति ॥ २६९ ॥

लेवो मिरिअमहोसहकेसरकुडिलेहि मच्छिआगरलं ।
णासेइ घउम्मीलिअसअउप्फा(सैं)धवकओ व्व ॥ २७० ॥

लेपो मरिचमहौषधकेसरकुटिलैर्माक्षिकगरलम् ।
नाशयति घृतोन्मिश्रितशतपुष्पासैन्धवकृतो वा ॥

कटुनागरकेसरतगरैर्जलवर्तितैः समांशैः कृतो लेपो माक्षिकाणां सरघाणां संबन्धि विषं नाशयति । अथवा गोघृतमिश्रया (तस्याः ? मिस्या) सैन्धवलवणयुक्तया कृतो लेप एवं करोति ॥ २७० ॥

कुलिसतरुदुद्धवट्टिअसिरीसबीएहि लित्तमवहरइ ।
दद्दुरविस(मा ? म)इसअदारुणं पि सलि(ल ? लेण)जलणो [व्व ॥ २७१ ॥

कुलिशतरुदुग्धवर्तितशिरीषबीजैर्लिप्तमुपशाम्यति ।
दर्दुरविषमतिशयदारुणमपि सलिलेन ज्वलन इव ॥

सुधावृक्षस्य क्षीरेण पिष्टं क्षीरतरुबीजैः कृतेन लेपेन लिप्तं मण्डूकविषं घोरमपि नश्यति । व्यक्तमुपमानमिति ॥ २७१ ॥

हरवल्लहरसमीसं दुद्धसमं गुळघआण पलजुअलं ।
उन्मत्तसुणहविसमविसवे(अ)णं हरइ पाणेण ॥ २७२ ॥

हरवल्लभसुरसोन्मिश्रं दुग्धसमं घृतगुलानां पलयुगलम् ।
उन्मत्तश्व(विषम)विषवेदनां हरति पानेन ॥

मातुलस्वरससहि(तेन ? त)क्षीरतुल्यांशयोर्घृतगुलयोः पलद्वयम् । एवमुक्तं भवति — चतुर्णां द्रव्याणां प्रत्येकमर्धपलम् एकत्र पलद्वयं पानेनोपयुक्तम् अलर्कदशनसंक्रान्तघोरविषव्यथां निवारयतीति ॥ २७२ ॥

काउंबरिआमूलं हरदइअफलाइ तण्डुळजळेण ।
समबीआइ व पीआइ कविलाविसदोससमणाइ ॥ २७३ ॥

काकोदुम्बरिकामूलं हरदयितफलानि तण्डुलजलेन ।
समबीजानि वा पीतानि कपिलविषदोषशमनानि ॥

सेरुकोदुम्बरिका फल्गु तस्या मूलं तण्डुलधावनेन सह पिष्ट्वा पीतं श्वदंशविषदोषं शमयति । अथवा धुर्धूरकफलानि असनतरुमूलतुल्यांशानि तेनैव तण्डुलजलेन पीतान्युक्तं कार्यं कुर्वन्तीति ॥ २७३ ॥

**जलपलिआए गोइज्जिआए महुमीसिआए कअलेवो ।**
**णीसेसजीअसंभवणहदन्तविसं खअं णेइ ॥ २७४ ॥**

जलवर्तितया गोजिह्वया (मधुमिश्रितया) कृतलेपः ।
निश्शेषजीवसम्भवनखदन्तविषं क्षयं नयति ॥

गोजिह्विकया गोधूमिकया पानीयेन पिष्टया माक्षिकेण सहितया (कृ ? कृ)तलेपः सर्वेषां विषवतां प्राणिनां नखदशनसमुद्भवं क्षपयति ॥ २७४ ॥

**णिम्बमसीवडवक्कलकाढिअसलिलेण लित्तमुवसमइ ।**
**णहदन्तविसं गरुअं दारुणिसारअणि(वि ?)लित्तं व ॥ २७५ ॥**

निम्बरजनीवटवल्कक्वथितसलिलेन लिप्तमुपशाम्यति ।
नखदन्तविषं गुरुकं दारुनिशारजनीलिप्तं वा ॥

पिचुमन्दपत्रपत्रन्यग्रोधत्वग्भिस्तुल्याभिः क्वथितेन सलिलेन लिप्तं घोरमपि पूर्ववन्नखदन्तजं विषं विनश्यति । अथवा दार्वीपिण्डहरिद्राभ्यां जलपिष्टाभ्यां लिप्तमेवं भवतीति ॥ २७५ ॥

**पत्तंगणिसाकेसरमञ्जिट्ठारआणिलेविआ (लूआ) ।**
**उवसमइ इं(गु)ईतरुवक्कललेवेण गण्डं व ॥ २७६ ॥**

पत्तङ्गनिशाकेसरमञ्जिष्ठाचित्रवल्लिलता दार्विस्त्येताभिर्जलपिष्टाभिर्मचोतिसा(?) लूता विनश्यति । तथा इङ्गुदीवृक्षस्य तिलवकस्य त्वचा जलपिष्टया लिप्तं सद् वा पिट(प?)कविशेष उपशाम्यति इति । उपमानद्वारेण द्वितीयप्रयोग इति । तत्र लूता सूर्यकिरणमध्यमेवा(रि ? ति)दुर्लक्षप्राणिरूपा दंशविशेषानुमेया । आयु(व ? र्वे)दात् तस्या लक्षणानि ज्ञेयानी(ति) ॥ २७६ ॥

**मूलेहि व वीएहि व कञ्जुअपिट्ठेहि लित्तमुवसमइ ।**
**कीडविड(अ ? आदि)दुट्ठं लंबासुरतालिफलिणीणं ॥ २७७ ॥**

मूलैर्वा बीजैर्वा काञ्जिकपिष्टैर्लिप्तमुपशाम्यति ।
कीटपिटकादिदुष्टं लम्बासुरतालिफलिनीनाम् ॥

तिक्तालाबुदेवतालीलाङ्गलीनामेकतमाया मूलैः फलैर्वा आरनालसञ्चूर्णितैर्दत्तलेपस्य शारीरकीटपिटकादित्वग्दोषो विनश्यति । कीटादि ग्रन्थ्याकारम् ।

येषां लोहितपा(पा ? मा)नां पाकेन विना स्वेदः कठिनं च मुखं दृश्यते ते पिटकाः प्रसिद्धा विकारा इति ॥ २७७ ॥

**तिळसरिसवमीसकरञ्जवीअळेवेण सअळपिडआण ।**
**(दा ? त)रुणफळदन्तिणिहि व भवज्जइ पसरो विळि-**
**[त्ताणं ॥ २७८ ॥**

**तिलसर्षपमिश्रकरञ्जबीजलेपेन सकलपिटकानाम् ।**
**(दा ? त)रुणफलदन्ति(नी)भ्यां वा भिद्यते वा प्रसरो विलिप्तानाम् ॥**

तिलसिद्धार्थकचूर्णमिश्रैः करञ्जस्य नक्तमालस्य बीजैः पानीयपिष्टैः कृतेन लेपेन ये केचित् पिटकभेदाः शरीरेषु सम्भवन्ति, तेषां प्रसूतिर्निवर्तते । यदि तरु(ण)स्यैरण्डस्य फलं (तेन) तथा दन्तिन्या निकुम्भेनेत्येताभ्यां कृताभ्यामेतत् कार्यं भविष्यतीति ॥ २७८ ॥

**जाळावद्दहविअणं हरेन्ति जळवट्टिआइ सघआइ ।**
**णीळीतण्डुळमूळाइ णूणमुवळेवमत्तेण ॥ २७९ ॥**

**ज्वालागर्दभवेदनां हरन्ति जलवर्तितानि सघृतानि ।**
**( तिल ? नीली )तण्डुलमूलानि नूनमुपलेपमात्रेण ॥**

नीलिन्या मेघनादस्य च मूलानि नूनमुपलेपमात्रेण तोयघृष्टानि घृतेन सहितानि लेपादव ज्वालागर्दभाख्यस्य व्याधेः सम्बन्धिनी व्यथां शमयन्ति । यस्यैवं लक्षणं पठन्ति — दोषैः पित्तोल्बणैः मत्तैः विसर्पवत् शोफपाकस्ताम्रो ज्वरकृत् ज्वालागर्दभो जालगर्दभ इति द्विधा चास्य संज्ञा श्रूयत इति ॥ २७९ ॥

**गोइभिआए मूळं (अहवा) उक्कण्टअस्स विहिगहिअं ।**
**तण्डुळजळेण दिण्णं सेअ(ळिअ)णिवारणं कुणइ ॥ २८० ॥**

**गोजिह्विकाया मूलमथवोत्कण्टकस्य विधिगृहीतम् ।**
**तण्डुलजलेन दत्तं शीतलिकानिवारणं करोति ॥**

गोजिह्विका व्याख्याता, तस्या मूलं ज्येष्ठोदकेन पिष्टं तेनैव सह पीतं सत् शीतलिकाव्याधेर्विस्फोटाख्यस्य विनाशं सम्पादयति । (अथवा उत्कण्टकस्य । विनाशं सम्पादयति । ?) अथवा उत्कण्टकस्य पुनर्नवाया मूलमेवमुक्तकार्यं करोति । सर्वौषधीनां ग्रहणे विधिर्नियमविशेषो ग्रन्थसमाप्तौ विवक्षित इति ॥ २८० ॥

**उवसग्गम्मि पअट्टे रअणी चिञ्चादळेहि सञ्जुत्ता ।**
**सिसिरजळपिट्ठपीआ करेइ सीअळिअपडिसेहं ॥ २८१ ॥**

उपसर्गे प्रवृत्ते रजनी चिञ्चादलैः संयुक्ता ।
शिशिरजलपिष्टपीता करोति शीतलिकाप्रतिषेधम् ॥

पिण्डहरिद्रा अम्लिकादलैः सह शीतलेन (जलेन) सञ्चूर्णिता तेनैव सह पीता पूर्वगाथोक्तस्य व्याधेः प्रसरनिरोधं करोति । कदा । उपसर्गे दैविक उपद्रवे बाहुल्येन प्रवृत्ते सति । उपसर्गजस्य शीतलिकादोषस्य निवर्तनेऽयं प्रयोग इति ॥ २८१ ॥

**जत्तिअमत्ता अङ्गे सीअळिआओ त्तिएहि पण्णेहि ।**
**छिण्णेहि सेळुतरुणो आउरणामेण णासन्ति ॥ २८२ ॥**

यावन्मात्रा अङ्गे शीतलिकास्तावद्भिः पर्णैः ।
छिन्नैः शेलुतरोरातुरनाम्ना विनश्यन्ति ॥

यावन्मात्राः सङ्ख्या यावन्त्यः आतुरस्य गात्रे शीतलिका उत्पत्त्यवसरे दृश्यन्ते, तावत्सङ्ख्यैरेव श्लेष्मातकतरोर्दलैर्देवदत्तस्य शीतलिका नश्यन्त्विति आतुरनामग्रहणपूर्वं त्रोटितैस्ता निवर्तन्त इति ॥ २८२ ॥

***अन्ते सेअळिअसमुब्भवम्मि गरुएहि देहसन्दावे ।**
**परिवासिअसळिळपाणं महुमीसफुळं (स ?) (पु ? कु)णइ**
**[॥ २८३ ॥**

रात्रिपर्युषितस्य माक्षिकसंयुक्तस्य तोयस्य पानं शीतलिकाजनितं शरीरस्यात्मदाहं शमयतीति ॥ २८३ ॥

**महिळाण तक्खणच्चिअ थक्कइ रुहिरं सिरम्मि विणिहित्ते ।**
**जळकळसे दुद्धेण व पीए चक्कङ्कमूळम्मि ॥ २८४ ॥**

महेलानां तत्क्षणमेव तिष्ठति रुधिरं शिरसि विनिहिते ।
जलकलशे दुग्धेन वा पीते चक्राङ्कमूले ॥

स्त्रीणामतिप्रवृत्तं रक्तं प्रदराख्यो व्याधिस्तत्क्षणेनैव निरुध्यते शीतलसलिलपूर्णे कलशे मस्तके न्यस्ते सति, अथवा गोक्षीरेण सुदर्शनामूले पीते सतीति ॥ २८४ ॥

---

* अस्य छाया मातृकायां न दृश्यते ।

**कुसवडिआतरुमूळाइ पीअमत्ताइ तण्डुळजळेण ।**
**महिळाण महारुहिरं वरेन्ति कअळीहळाइ व्व ।। २८५ ।।**

कुशवाव्यालकतरुमूलानि (समांशानि?) पीतमात्राणि तण्डुलजलेन ।
महेलानां महारुधिरं वारयन्ति कदलीफलानि वा ।।

स्त्रीणामतिरजः कुशानां दर्भाणां तथा वाट्यालकस्य बलाया मूलानि समांशानि वरजलेन पिष्ट्वा पीतान्येव नि(तन्व?रुन्ध)न्ति । अथवा रम्भायाः फलं मोचकाख्यं घृतेन सह पीतमेतत्कार्यं करोतीति ।। २८५ ।।

**तण्डुळसलिळेण बळा पुराणगुळविरइअव्व पोराळी ।**
**महिळाण महारुहिरं (वि) पीअमत्ते णिवारेइ ।। २८६ ।।**

तण्डुलसलिलेन बला पुराणगुलविरचिता (वा) बदराली ।
महेलानां महारुधिरमपि पीतमात्रान्निवारयति ।।

ज्येष्ठसलिलेन पिष्टा तेनैव सह पीता बला (तस्या?) महारुधिरं घोरमपि प्रदरं स्त्रीणां निवारयति । अथवा बदरचूर्णं शीतलगुलसममात्रं ज्येष्ठजलपीतम् उक्तकार्य(कर)मिति ।। २८६ ।।

**दुद्धेण बळामूळं घणरवमूळाइ तण्डुळजळेण ।**
**महुमीसिअमेक्केक्कं पीअं पअरं समं णेइ ।। २८७ ।।**

दुग्धेन बलामूलं घनरवमूलानि तण्डुलजलेन ।
मधुमिश्रितमेकैकं पीतं प्रदरं शमं नयति ।।

बलायाः कन्दौदन्या मूलं गोक्षीरेण पिष्टं पीतं मधुसंयुक्तं प्रदरमतिरजः शमयति । अथवा लोहितलीलसस्य मूलानि ज्येष्ठोदकेनैव पीतानि माक्षिकसहितान्येवोक्तं कार्यं कुर्वन्तीति ।। २८७ ।।

**पिट्ठञ्च रत्तसाळीण दुद्धसिद्धं सुसीअळं समहु ।**
**पीअमवहरइ पअरं सिवचिन्ता पापणिवहं व ।। २८८ ।।**

पि(ष्टेन?ष्टं च) रक्तशालीनां दुग्धसिद्धं सुशीतलं समधु ।
पीतमपहरति प्रदरं शिवचिन्ता पापनिवहमिव ।।

रक्तशालीनां लोहितशालीनां शालिविशेषाणां संबन्धि पिष्टं तण्डुलचूर्णं गोक्षीरेण सह क्षीरिणीवत् पक्कं पश्चात् सिद्धं माक्षिकेण सहोपयुक्तमतिरजः शमयति । यथा महेश्वरस्मरणं किल्बिषसमूहमिति ॥ २८८ ॥

**ळक्का घअसक्कढिआ पीआ दुद्धेण हरइ महिळाण ।**
**मोअररसो व्व सीसे अमुणिअणिम्मीळिओ पअरं ॥२८९॥**

**लाक्षा घृतसंक्कथिता पीता दुग्धेन हरति महेलानाम् ।**
**मयूरकरसो वा शीर्षे अज्ञातनिष्पी(डि)तः प्रदरम् ॥**

लाक्षा तरुव्याधिः पूर्वं घृतेन कथि(ते ? ता) पश्चाद् दुग्धेन पिष्टपीता स्त्रीणामतिरजः शमयति । अथवा अपामार्गस्य अगृहीतसंज्ञस्यैवातुरशिरसि निष्पीडितस्य रस उक्तं कार्यं करोतीति ॥ २८९ ॥

**चुण्णं तिअडुअदिअळट्ठिआण तिळकाढेण पिअमवहरइ ।**
**विसमं पि रत्तगुम्मं कुसुमणिरोहञ्च तरुणीण ॥ २९० ॥**

**चूर्णं त्रिक(टुक)द्विजयष्ट्यास्तिलकाथेन पीतमपहरति ।**
**विषममपि रक्तगुल्मं कुसुमनिरोधं च तरुणीनाम् ॥**

व्योषस्य चूर्णं ब्राह्मणयष्ट्याश्च मूलचूर्णमेवं चतुर्णां समांशानां चूर्णं तिलकथितेन सह पीतं स्त्रीणां घोरमपि रक्तगुल्मं वातेन गुल्मत्वमापादितं रक्तं तथा कुसुमस्य ऋतुकालजस्य रक्तरोधं स्तम्भं शमयतीति ॥ २९० ॥

**किव्वकणागुळमअणफळदन्तिजळक्खारतुंबिबीएहि ।**
**सकुळिसदुद्धा वत्ती जोणिगआ कुसुम(सं)जणणी ॥ २९१ ॥**

**किण्वकणागुळमदनफलदन्तीयवक्षारतुम्बिबीजैः ।**
**सकुलिशदुग्धा वर्ती योनिगता कुसुमसञ्जननी ॥**

किण्वं सुराबीजं तथा पिप्पली तथा गुलः तथा मदनस्य सुमनस्य फलं तथा निकुम्भः तथा यवशूकः तथा तिक्तालाबुबीजान्येतानि तुल्यांशानि सुधाक्षीरेण वर्तितानि कृत्वा कृता वर्ती स्त्रीणां वराङ्गन्यस्ता कुसुमस्यान्तर्भवस्य रजसः प्रवर्तनीति ॥ २९१ ॥

**णवणा(अ)एसरचुण्णं घएण पाऊण कुसुमदिअहेसु ।**
**दुद्धरआ स + णरसङ्गमेण णारी सुअं ळभइ ॥२९२॥**

**नवनागकेसरचूर्णं घृतेन पीत्वा कुसुमादिवसेषु ।**
**दुग्धर(त ? ता) सदा नरसङ्गमेन नारी सुतं लभते ॥**

नवस्य प्रत्यग्रस्य कनकस्य चूर्णं गोघृतेन सहावलेह्यं प्रागृतुदिनान्युपयुज्य गोक्षीराहा(र ? रा) पुरुषसंप्रयोगेन पुत्रं लभते । सदेति, प्रयोगस्याव्यभिचारार्थं नित्यग्रहणमिति ॥ २९२ ॥

**सघअं णाम(ण)विहिणा दाहिणणा(सा)उडम्मि उदुसमए ।**
**वज्झाणं देइ सुअं ळिङ्गङ्किअळक्खणामूळम् ॥ २९३ ॥**

**सघृतं नावनविधिना दक्षिणनासापुटे ऋतुसमये ।**
**वन्ध्याभ्यो ददाति सुतं लिङ्गाङ्कितलक्ष्मणामूलम् ॥**

केनचिद् वस्तुना लिखितेन लिङ्गेनाङ्कितं कृतचिह्नं यल्लक्ष्मणायाः पुत्रजनन्योषधेर्मूलं तद् वन्ध्याभ्यः गर्भग्रहणरहिताभ्यः पुत्रजन्म प्रयच्छति केन प्रकारेण * ॥ २९३ ॥

**(दक्खि ? एके)ण सिहिसिहाळक्खणाण मूळेण दुद्धपीएण ।**
**गब्भं धरेइ महिळा कुसुमवई तीण्णि दिअहाइ ॥ २९४ ॥**

**एकेन शिखिशिखालक्ष्मणयोर्मूलेन दुग्धपीतेन ।**
**गर्भं धारयति महेला कुसुमवती त्रीणि दिवसानि ॥**

मयूरशिखापुत्रजननीमूलयोरेकतमेन गोक्षीरेण सह त्रीणि दिवसानि पिष्टपी(तानि ? तेन) महेला गर्भमपत्यं गृह्णाति । वन्ध्या पीतसंयोगा (?) न भवतीत्यर्थः ॥ २९४ ॥

**कुणइ कुरण्डअमूळं ऋद्धिं गब्भस्स पीअमणुदिअहं ।**
**गोहामिसे व कमिसो थोअत्थोअं समब्भसिअं ॥ २९५ ॥**

**करोति कुरण्टकमूलम् ऋद्धिं गर्भस्य पीतमनुदिवसम् ।**
**गोधामिषं वा क्रमशः स्तोकस्तोकं समभ्यस्तम् ॥**

कुरण्डस्याम्लातकस्य मूलं पानीयेन पिष्टं सत् तेनैव सह प्रतिदिवसं पीतं गर्भस्य ऋद्धिं सम्पूर्णधातुत्वं करोति । अथवा गोधा प्राणिविशेषः प्रसिद्धस्तन्मांसं क्रमेणाभ्यस्यमानमुक्तं कार्यं करोतीति ॥ २९५ ॥

---

* अवशिष्टो भागः लुप्तः स्यात् ।

**जळपिट्टं जोणिगअं धरेइ (ण धरेइ) जट्ठजळपीअं ।**
**गब्भं ळक्खेसदिसाम्ब्रभुन्दुरुकण्णिआमूळं ॥ २९६ ॥**

जलपिष्टं योनिगतं धारयति न धारयति ज्येष्ठजलपीतम् ।
गर्भं यक्षेशदिग्भवमुन्दुरुकर्णिकामूलम् ॥

उन्दुरुकर्णिकाया मूषिककर्णिकाया मूलमुदीचीप्रसूतं जलेन पिष्टं वराङ्गस्थं सद् गर्भं धारयति । तण्डुलधावनेन सह पिष्टं पीतं तु गर्भं न धारयति प्रवर्तयतीत्यर्थः ॥ २९६ ॥

**जा महुघअमीसपळासबीअळेवं करेइ भअकुहरे ।**
**उदुसमए सा महिळा ण कआ(इ) वि होइ गब्भवई [॥ २९७ ॥**

या मधुघृतमिश्रपलाशबीजलेपं करोति भगकुहरे ।
ऋतुसमये सा महेला न कदाचिदपि भवति (गर्भवती) ॥

या स्त्री गोघृतक्षौद्राभ्यां सहितेन पलाशतरोः किंशुकस्य बीजानां चूर्णेन योन्यन्तरम् ऋतुकाले लिम्पति, सा न कदाचिदपि गर्भं गृह्णाति । ऋतुकालशेषप्रयोगो न तु सकृदेवेति ॥ २९७ ॥

**रइसमए तेळळोळ्ळं गब्भासअवअणविणिहिअं विहिणा ।**
**अवहरइ ळोणखण्डं गब्भभअं दुट्टरण्डाण ॥ २९८ ॥**

रतिविरामे तैलार्द्रं गर्भाशयवदनविनिहितं विधिना ।
अपहरति लवणखण्डं गर्भभयं दुष्टरण्डानाम् ॥

दुश्शीलविधवानां सैन्धवशकलं तिलतैलाभ्यक्तं गर्भसम्भवं त्रासं हरति । गर्भं तासां नाशयतीत्यर्थः । किं कृतं सत्, सुरतावसाने गर्भग्रहणमुखे विधिना तत्रैव सम्यक्समर्पणरूपेण प्रकारेण निक्षिप्तमिति ॥ २९८ ॥

**पूसुम्मूळिअहरदइअमूळिअं णिअकडीए बन्धेउं ।**
**कामेह कामिणीओ कामेन्ति ण पसवितं जाउ ॥ २९९ ॥**

पुष्योन्मूलितहरदयितमूलिकां निजकटौ बद्ध्वा ।
कामयन्तं कामि(नीं ? न्यः) कामयन्ते (न) प्रसवितुं यान्ति ॥

पुष्यनक्षत्रोत्खातां मातुलशिफां स्वनितम्बे ग्रथयित्वा रमणी रमयति । यास्ताः प्रसवं नेच्छन्ति ॥ २९९ ॥

**जळकुसुमकन्दातिळसक्कराओ महुमीसिआ(ओ) पीआओ ।**
**वारेन्ति गब्भपडणं धम्ममई कुगइगमणं व ॥ ३०० ॥**

जल(कुसुमकन्दातिल)शर्करा मधुमिश्रिताः पीताः ।
(धा ? वा)रयन्ति गर्भपतनं धर्ममतिः कुगतिगमनमिव ॥

जलकुसुमस्य पद्मस्य कन्दं बिसं तथा तिलास्तथा सितशर्करा एतानि समांशानि माक्षिकेणोपयुक्तानि गर्भस्य पातं निरुन्धन्ति । यथा धर्मबुद्धिर्नरकपातमिति ॥ ३०० ॥

**धाअइकुसुमसमंगाणीळुप्पळसबरकुसुममारेहि ।**
**ण पडइ गब्भो जळसण्ठिआइ दुद्धेण पीएहि ॥ ३०१ ॥**

धातकीकुसुमसमङ्गानीलोत्पल(शबर)कुसु(म)मारैः ।
न पतति गर्भो जलसंस्थिताया दुग्धेन पीतैः ॥

आ नाभेः पानीयान्तर्गताया गर्भवत्या गर्भम् एतैर्द्रव्यैर्गोक्षीरेण सह पीतैर्न पतति न स्रवति । कैर्द्रव्यैः । धातकी मदयन्ती तत्पुष्पैस्तथा लज्जावत्यास्तथा कुवलयैस्तथा लोध्रेण एतैः समांशैर्माक्षिकेणावलोलितैरिति ॥ ३०१ ॥

**सिहसुरहिकळमतण्डुळचुण्णं समसक्करं पिअन्तीए ।**
**उंबरिकन्दकसाएण पडइ गब्भो (ण) महिळाए ॥ ३०२ ॥**

सितसुरभिकलमतण्डुलचूर्णं समशर्करं पिबन्त्याः ।
उदुम्बरिकन्दकषायेण पतति गर्भो न महेलायाः ॥

शुक्लस्य सुगन्धस्य च शालेः पिष्टं सितशर्करासमां(शैः ?शं) काकोदुम्बरिकाया मूलक्वथितेन सह पिबन्त्याः (नया ? नार्या) गर्भो (महेलायाः शुक्लाशुक्लस्य सुगन्धस्य शालेः पिष्टम्मतिशर्करासमांशैः काकोदुम्बरिकाया मूलकाथेन सह पिबन्त्यानया गर्भो?) न विस्रवतीति ॥ ३०२ ॥

**थंभेइ गब्भपडणं कुळा(कु ?)ळकरकद्दमं मुहुत्तेण ।**
**........ धरिआ गिरिअण्णिअजडव्व ॥ ३०३ ॥**

**(स्तम्भयति गर्भपतनं कुलालकरकर्दमं मुहूर्तेन ।**
**............ धृता गिरिकर्णिकाजटा वा ॥)**

कुम्भकारपाणिलग्नो मृत्पिण्डो माक्षिकयुक्तेन छागक्षीरेण सह पीतो ग(र्भिणी ? र्भं नि) रुणद्धि । अथवा श्वेतस्पन्दाया मूलं नारीनितम्बबद्धमेवं करोतीति ॥ ३०३ ॥

**पज्झरइ सोणिअं गब्भिणीए गब्भाव जीए महिळाए ।**
**तिस्सा पाणं तण्डुळजळेण पारावअपुरीसं ॥ ३०४ ॥**

(प्रस्रवति शोणितं गर्भिण्या गर्भाद् यस्या महेलायाः ।
तस्याः पानं तण्डुलजलेन पारावतपुरीषम् ॥)

यस्या गर्भिण्या गर्भाद् रक्तं स्रवति, तस्यास्तन्निवृत्तये कलरवमलं ज्येष्ठाजलेन सह पानं देयमिति ॥ ३०४ ॥

**महुअसिआकुवळअकन्द(चुण्ण)पाणं परिब्भमइ गब्भे ।**
**महिळाण हरइ पीडं परि(पी ? षे)ओ सीअळो तहअ ॥**

मधुकसिताकुवलयकन्दचूर्णपानं परिच्युते गर्भे ।
महेलानां हरति पीडां परिषेकः शीतलस्तथाच ॥

मधुयष्टिसितोत्पलमूलानां समांशानां चूर्णस्य पानीयेन सह पानं स्त्रीणां गर्भच्युतौ सत्यां वेदनां निवारयति शिशिरश्च परिषेक इति ॥ ३०५ ॥

**कढिआरनाळपीअं सिन्धुब्भवहिंगुचुण्णमबळाण ।**
**तुरिअं करेइ पसवं कडिबद्धा मातुळजडव्व ॥ ३०६ ॥**

क्वथितारनालपीतं सिन्धूद्भव(हिङ्गु)चूर्णमबलानाम् ।
त्वरितं करोति प्रसवं कटिबद्धा मातुलजटा वा ॥

सैन्धवलवणबाह्लीकयोश्चूर्णं क्वथितकाञ्चिकेन सह पीतं स्त्रीणामाशु गर्भमोक्षं करोति । अथवा हरवल्लभस्य मूलं स्त्रीनितम्बे ग्रथितमेवं करोति ॥

**एक्कं सुरअरुवाअसमोरअमूळाण विहिपरिग्गहिअं ।**
**महिळाण कडिणिबद्धं सुहपसवं कुणइ णिमिसेण ॥३०७॥**

एकं सुरतरुवायसमयूरकमूलानां विधिपरिगृहीतम् ।
महेलानां कटि(नि)बद्धं सुखप्रसवं करोति निमिषेण ॥

सुरतरुः पारिभद्रकः तथा वायसजङ्घा तथा अपामार्गः एतन्मूलानामेकं स्त्रीणां नितम्बग्रथितं सुखेन शीघ्रं च प्रसवं करोतीति (विधिरक्षति ?) ॥३०७॥

**वाढाए मोरअस्स व मूळं महिळाण जोणिविणिहित्तं ।**
**कुणइ सुहं विअ पसवं दुक्खप्पसवाण वि खणेण ॥३०८॥**

भङ्ग्या अपामार्गस्य वा मूलं महेलानां योनिविनिहितम् ।
करोति सुखमेव प्रसवं (दुःख)प्रसवानामपि क्षणेन ॥

भक्षया अपामार्गस्य (वा) मूलं स्त्रीणां वराङ्गनिक्षिप्तं सक्लेशप्रसवानामप्य-क्लेशेनैव शीघ्रं गर्भमोक्षं सम्पादयतीति ॥ ३०८ ॥

जइ तं मोरअमूळं पावो कुट्टइ समुद्धरिज्जन्तं ।
ता पस्रविहिइ कुमारीं महिळा तणअं अकुट्टम्मि ॥ ३०९ ॥

यदि तन्मयूरकमूलं तदानीं खण्ड्यते समुद्ध्रियमाणम् ।
तत् प्रसोष्यते कुमारीं महेला तनयमखण्डिते ॥

यदि तदपामार्गमूलं पूर्वोक्तप्रयोग(ार्थ)मुन्मूल्यमानं तदानीमेव त्रुट्यति तन्नारी कन्यां जनयिष्यतीति ज्ञेयम् । अत्रुटिते तूद्धृते पुत्रमिति ॥ ३०९ ॥

पुडदड्ढसप्पकञ्चुअमसिणमसीकुसुमसारभरिअच्छी ।
झ(त्ति) विसळ्ळा जाअइ गब्भवई मूढगब्भा वि ॥ ३१० ॥

पुटदग्धसर्पकञ्चुकमसृणमषीकुसुमसारभरिताक्षी ।
झगिति विशल्या जायते गर्भवती मूढगर्भापि ॥

अन्तर्धूमदग्धेन भुजगनिर्मोकेन कृतं यत् सूक्ष्मपिष्टं (भरिते ? तेन) माक्षि-कमिश्रितेन पूरितनेत्रा अपमार्गप्रवृत्तगर्भापि स्त्री तत्कालमेव विगतशल्या सम्पद्यते । सुखेन शीघ्रं मुञ्चतीत्यर्थः ॥ ३१० ॥

थोएणच्चिअ णिपडइ (पु?कु)ळिसच्छीरेण सीसणिहिएण ।
महिळाण गब्भसळ्ळं सरपुंखामूळिआएण ॥ ३११ ॥

स्तोकेनैव निपतति कुलिशक्षीरेण शीर्षनिहितेन ।
महेलानां गर्भ(शल्यं) शरपुङ्खामूलिकाया वा ॥

सुधाक्षीरेणाल्पेनापि मूर्धन्यस्तेन स्त्रीणां जरायुः केवलगर्भरहितो वा निपततीति । अथवा बाणपुङ्खाया मूलेन शिरसि न्यस्तेन एवं भवतीति ॥ ३११ ॥

पडइ पभावेणच्चिअ गब्भो महिळाण जोणिधरिआए ।
.... ... .... जाआ वा जडाए ॥ ३१२ ॥

.... .... .... .... ....
.... ... .... .... ....

आर्द्रायाः श्वेतापराजितायाः जटामूलेन वीर्यमात्रेणैव महेलानां गर्भः प्रवर्तते । कीदृश्या । अन्तर्वराङ्गस्थापितया । अथवा काकादन्याः शिफयैवं कृतया गर्भः पततीति ॥ ३१२ ॥

